कविहृदयम्–

# अर्थकामयोः प्राप्तिरहस्यम्

यथेक्षुहेतोः सलिलं निषेचितं
तृणानि वल्लीरपि प्रसिञ्चति।
तथा नरो धर्मपथेन वर्तयन्
यशश्च कामांश्च वसूनि सोऽश्नुते॥

– महाभारतम्

"कृषिकः इक्षुवर्धनम् इच्छन् इक्षुसस्यानि जलेन सिञ्चति। तत्समये सहजतया तस्मिन् क्षेत्रे स्थिताः तृणलतादयः अपि सिक्ताः भवन्ति। एतस्य फलतः इक्षुवर्धनसमये तृणवल्ल्यादयः अपि वर्धन्ते। धर्मविषये अपि एषा एव नीतिः अन्वेति। यः धर्ममार्गेण गच्छति सः धर्माचरणफलेन सहैव कीर्तिम् अन्यानि प्रयोजनानि च प्राप्नोति।"

पुरुषार्थचतुष्टये धर्मः अर्थः कामः च इहलोकसम्बन्धिनः। एतेषां पारस्परिकः कश्चन सम्बन्धः अस्ति। धर्ममार्गेण गच्छन् कश्चित् उचितेन प्रयासेन अर्थं कामं च प्राप्तुम् अर्हति। केवलस्य धर्मस्य सेवनं यथा शक्यते तथा केवलस्य अर्थस्य कामस्य वा सेवनं न शक्यते। अर्थः कामश्च धर्माविरुद्धेन मार्गेण एव सदा सेवनीयौ।

अर्थकामयोः द्वारा भोगसाधनानि लभ्यन्ते। अस्माकं मनश्च सदा भोगपक्षपाति। अतः अधिकांशाः जनाः भोगसाधनेच्छया अर्थं कामं च कामयन्ते। धर्ममार्गेण तयोः प्राप्तिः वेगेन अत्यधिकप्रमाणेन च न भवति। अतः धर्मविरुद्धेन वा मार्गेण तौ प्राप्तव्यौ इति बहवः प्रयत्नं कुर्वन्ति।

किन्तु अर्थकामयोः अयं स्वभावः यत् यः तौ अनुधावति, ततः तौ दूरं गच्छतः। यश्च तयोः प्राप्तिविषये निरासक्तः, तम् अनुसरतः तौ। धर्ममार्गेण यः तौ अनुसरति तं तौ विधेयः सेवकः इव अनुचरतः।

एतदेव अर्थकामयोः प्राप्तेः रहस्यम्। किन्तु एतत् अप्रियं पथ्यम्। अप्रियस्य पथ्यस्य श्रोता सदा सुदुर्लभः एव खलु?

जिज्ञासा –

# 'जित:' – कर्तरि न

आचार्य:- वत्स! 'अ' 'ब' इति पक्षद्वयम् अस्ति इति चिन्तयतु। तयो: मध्ये स्पर्धा प्रचलति। 'अ'पक्ष: जयं प्राप्नोति। 'ब'पक्ष: च पराजयं प्राप्नोति। एवं तर्हि – 'ब'पक्ष:= पराजित:, 'अ'पक्ष:= ?

शिष्य:- 'अ'पक्ष:=जित:।

आ - मया यथा चिन्तितं तथैव उक्तवान् भवान्। वस्तुत: तु 'जयं प्राप्तवान्' इत्यर्थे 'जित:' इति प्रयोग: दोषाय।

शि - तर्हि किमिति प्रयोक्तव्यम्?

आ - 'जितवान्' इति क्तवतुप्रत्ययान्तं रूपं प्रयोक्तव्यं, न तु 'जित:' इति क्तप्रत्ययान्तम्।

शि - किमर्थम् एवम्? 'जित:' इति प्रयोगे कृते क: दोष:?

आ - 'जयं प्राप्तवान्' इत्यर्थे खलु भवता 'जित:' इति प्रयुक्तम्? अत्र क्तप्रत्यय: कस्मिन् अर्थे?

शि - कर्त्रर्थे। यत: स च कर्तरिप्रयोग:।

आ - जिधातु: सकर्मक:, उत अकर्मक:?

शि - 'संस्कृतभाषा जयति' इत्यत्र अकर्मकत्वं भासते। 'राम: रावणं जयति' इत्यत्र सकर्मकत्वं दृश्यते।

आ - वस्तुत: जिधातुद्वयम् अस्ति। जि-जये इत्येक:। जि-अभिभवे इत्यपर:। जय: नाम उत्कर्ष:। एतदर्थक: जिधातु: अकर्मक:। 'संस्कृतभाषा जयति' इत्यस्य अर्थ:– 'संस्कृतभाषा सर्वोत्कर्षेण वर्तते' इति।

अभिभवः नाम न्यूनीकरणम्। एतदर्थकः जिधातुः सकर्मकः।
उदाहरणं तु– रामः रावणं जयति इति।

शि - अवगतः अयम् अंशः।

आ - स्पर्धा-युद्धादिषु सकर्मकस्य जिधातोः (जि-अभिभवे इत्यस्य) प्रयोगः भवति। सकर्मकधातवः सर्वे कर्तरि क्तप्रत्ययं न अर्हन्ति इति जानाति खलु भवान्?

शि - आम्। सकर्मकेषु गत्यर्थकाः केवलं कर्तरि क्तप्रत्ययम् अर्हन्ति, न इतरे।

आ - एतत्सन्दर्भे जिधातुः सकर्मकः। किन्तु गत्यर्थकः न। तथापि क्तप्रत्ययः कृतः। अतः दोषः। 'अ'पक्षः जितः इति अयं कर्मणिप्रयोगः चेत् साधुः। तदा तु 'ब'पक्षेण इति तृतीयान्तस्य पदस्य अध्याहारः क्रियते। तदा अर्थः तु– 'अ'पक्षः पराजयं प्राप्नोत्, 'ब'पक्षः जयं प्राप्नोत् इति भवति। अयं विपरीतः अर्थः अत्र न अभिप्रेतः।

शि - 'अहं जितः' इति उच्यते चेत् 'अहं पराजयं प्राप्तवान्, मम प्रतिस्पर्धी जयं प्राप्तवान्' इत्यर्थः सिद्ध्यति इति?

आ - आम्। तत्र सन्देहः एव मास्तु भवतः।

शि - श्रीमन्! जिधातुः अकर्मकः अपि कश्चन अस्ति खलु? स एव अत्र अभिप्रेतः, न तु सकर्मकः इति वदामि अहम्। अकर्मकः धातवः कर्तरि अपि क्तप्रत्ययं प्राप्नुवन्ति एव। अतः 'जयं प्राप्तवान्' इत्यर्थे 'जितः' इति प्रयोगः साधुः एव इति कुतो वा न वक्तव्यम्?

आ - तन्नाम 'जि-जये' इत्यस्य अकर्मकधातोः प्रयोगः अत्र इति वक्तव्यम् इति? तथा चेत् 'जितः' इति रूपं कर्तरि साधु भवेत्। किन्तु तादृशः अर्थः अत्र न अभिप्रेतः खलु? स्पर्धायाम् अन्यस्य पक्षस्य न्यूनीकरणं भवति। अतः तत्र सकर्मकः जिधातुः इत्येव वक्तव्यं भवति। सकर्मकत्वे कर्तरिक्तप्रत्ययः तस्य दुर्लभः एव। अतः कथमपि वयम् 'अहं जितः' इत्यादीन् प्रयोगान् समर्थयितुं न शक्नुमः।

# पकड़ो अपने दोस्त को... कहीं, ग़ायब न हो जाए.

यह है मैग्नेटिक हैण्डीबॉय. और
यह मिलता है **मुफ़्त-**
25 हैण्डीप्लास्ट स्ट्रिप वाले हर पैक के साथ.
देखो कैसे-कैसे करिश्मे
दिखाता है यह- तुम्हारे
फ्रिज या कपबोर्ड से चिपक
जाये और तुम्हारी हर बात
सुने... तुम्हारी तसवीर या
कार्ड को सही ढंग से
पकड़ कर रखे... और अब, अगर
अपनी मम्मी से कहकर
तुमने इस हैण्डीप्लास्ट पैक
को जल्द नहीं ख़रीदवाया
तो ये एक और
करिश्मा दिखाएगा...
ग़ायब हो जाएगा.
**तो जल्दी करो ! अपना
हैण्डीबॉय
मैग्नेट आज
ही लो.**
यह भेंट
स्टॉक रहने
तक ही.

## मुफ़्त!

मैग्नेटिक हैण्डीबॉय
25 पट्टियों के हर पैक के साथ




हैण्डीप्लास्ट इस भेंट के बिना भी उपलब्ध है.

HTA 1549




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

लोके बहवः जायन्ते म्रियन्ते च। एतद्विषये वार्ताः पत्रिकासु बहुधा प्रकाश्यन्ते, आकाशवाण्यादिषु प्रसार्यन्ते च। एताः वार्ताः ज्ञात्वा बहवः औदासीन्यं प्रकटयन्ति। यस्मिन् कुटुम्बे जन्म मरणं वा जातं, तेन कुटुम्बेन येषां नैकट्यं भवति ते केवलं हर्षं खेदं वा प्राप्नुवन्ति। एवं नैकट्यं हृदयेषु भावबन्धं कल्पयति।

देशे असंख्याः विद्यार्थिनः प्रतिवर्षं संस्कृतं पठन्ति। किन्तु ते किमर्थम् अनन्तरकाले संस्कृतात् दूरं गच्छन्ति? तत्र कारणम् एकम् एव – नैकट्याभावः। शालासु यः पाठ्यक्रमः भवति सः नैकट्यं कल्पयितुं न शक्नोति। पाठ्यक्रमस्य तादृशं सामर्थ्यं न भवति। नैकट्यकल्पनं शिक्षकस्य दायित्वं भवति। तत्र सरलः उपायः नाम सम्भाषणस्य पाठनम्। सम्भाषणपाठनार्थं महान् प्रयत्नः अपेक्षितः इति नास्ति। केषाञ्चित् दिनानां प्रयत्नेन शिक्षकः कश्चित् छात्रेषु संस्कृतसम्भाषणवातावरणम् आनेतुम् अर्हति। सम्भाषणं भाषया सह नैकट्यं कल्पयति इति तु अनुभवसिद्धोऽयं विषयः इदानीम्। छात्रः कश्चित् सम्भाषणप्रवृत्तिमान् भवति चेत् सः तां प्रवृत्तिम् अनुवर्तयति एव। तदा सहजतया नैकट्यं वर्धते।

संस्कृताध्यापकः शालाम् अपि कार्यक्षेत्रं मन्येत। अध्यापनवृत्त्या सह संस्कृतविषये प्रीतिजननम् अपि मम कर्तव्यम् इति भावयेत् सः।

सम्पुटः–६ सप्टम्बर्–१९८९ सञ्चिका–६

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००



रसप्रश्नाः–

# सेतुः सिद्धा, ततः ......

(समुद्रतीरं प्राप्तः रामः सामोपायेन समुद्रं प्रार्थितवान्। किन्तु समुद्रः औदासीन्यं प्रकटितवान्। तदा क्रुद्धः रामः धनुषि बाणं योजितवान्। एतस्मात् भीतः समुद्रः प्रत्यक्षीभूय सेतुनिर्माणक्रमं सूचितवान्। सेतुनिर्माणं सम्पन्नम्। रामसेना लङ्कातीरं गता। रामसेनायाः सामर्थ्यं ज्ञातुं रावणः विविधान् प्रयत्नान् कृतवान्। वाल्मीकिरामायणस्य एतस्य कथाभागस्य आधारेण अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

१. सेतुः अमुकपुरुषेण एव निर्मातव्या इति कः सूचितवान्?
२. सेतुः केन वानरवीरेण निर्मिता?
३. सः कस्य पुत्रः?
४. सेतोः विस्तारः दैर्घ्यं च कियत् आसीत्?
५. सेतुनिर्माणार्थं कति दिनानि आवश्यकानि अभवन्?
६. अपायनिवारणार्थं सेतोः दक्षिणतः कः स्थितवान्?
७. समुद्रम् उल्लङ्घ्य आगता रावणसेना कुत्र स्थिता?
८. रामसेनायाः बलं ज्ञातुं रावणः कौ प्रेषितवान्?
९. तौ केन वेषेण रामसेनां प्रविष्टवन्तौ?
१०. वेषान्तरेण सञ्चरन्तौ तौ कः गृहीतवान्?
११. कृतापराधिनौ अपि तौ किमर्थं बन्धविमुक्तौ कृतवान् रामः?
१२. ताभ्यां शत्रुबलनिर्णयं कर्तुं न शक्तम् इति ज्ञात्वा रावणः किं कृतवान्?
१३. शत्रुबलं ज्ञातुम् इच्छन् रावणः पुनरपि गुप्तचरान् प्रेषितवान्। तेषां गुप्तचराणां नायकः कः?

उत्तराणि–

१. समुद्रः। २. नलेन। ३. विश्वकर्मणः। ४. दशयोजनविस्तीर्णा, शतयोजनदीर्घा च। ५. पञ्च दिनानि। ६. विभीषणः। ७. सुवेलपर्वतस्य समीपे। ८. अमात्यौ शुकसारणौ। ९. कपिवेषेण। १०. बिभीषणः। ११. दूतः न वध्यः इत्यतः। १२. स्वयं सौधम् आरुह्य सेनाबलं दूरात् दृष्टवान्। १३. शार्दूलः।

# र स वा र्ता:




## महार्घा घटी

जिनीवादेशस्था हस्तघटीनिर्मात्री संस्था काचित् स्वस्य १५० तम वर्षस्य समाप्तेः स्मरणार्थं कर्मकुशलानां साहाय्येन नववर्षात्मकेन प्रयत्नेन एकां घटीं निर्माय सघोषविक्रयणम् अकरोत्। सा घटी निमेषद्वयाभ्यन्तरे २७,४०,००० डालर्मूल्येन विक्रीता अभवत्।

## अतिदीर्घतमं कार्यानम्

फिन्लेण्ड्देशे निर्मितं प्रपञ्चे एव अतिदीर्घतमं कार्यानं सर्वप्रथमं 'हेल्सेङ्की' इत्यत्र प्राक्प्रश्यतां गतम्। एतस्य दैर्घ्यं २१.९३ मीटर्। इतः पूर्वं जपानदेशेन निर्मितं २१ मीटर्दीर्घं कारयानं दीर्घतमत्वेन ख्यातम् आसीत्। इदानीम् एतत् कारयानं स्वनाम 'गिन्नीसुपुस्तके' उल्लिखितम् अकरोत्।





## मार्जारध्यानम्!

कौलालम्पूर् इत्यत्र कश्चन मार्जारः एकस्मात् वर्षतः प्रतिदिनं किञ्चन बौद्धमन्दिरम् आगच्छन् अस्ति। चित्रं नाम, एषः मार्जारः ध्यानस्थानां भक्तानां मध्ये गत्वा पृष्ठभागे स्थितयोः पादयोः आधारेण उपविश्य अग्रिमपादौ उन्नीय नमस्कारं करोति। भक्ताः यावत् ध्यानविमुखाः न भवन्ति तावत् एषः एवम् एव नमस्कारमुद्रया तिष्ठति!

## हासयति निरन्तरम्

बेल्ग्रेड्स्थः मरुस्लाव् लोविक् नामकः पुरुषः प्रेक्षकान् ५५ घण्टाः यावत् निरन्तरं हासयन् नूतनं विक्रमं स्थापितवान् अस्ति। स्वभाषणे सः पूर्वम् उक्ताः विनोदकणिकाः पुनः न उक्तवान्।



# उपदेशे औचित्यम्

शिवपुरं कश्चन अल्पः ग्रामः। कदाचित् कश्चन संन्यासी तं ग्रामम् आगत्य ग्रामसीमायां स्थितस्य कासारस्य तीरे वृक्षस्य अधः कृष्णाजिनं प्रसार्य उपविष्टवान्।

ग्रामीणाः भक्त्या आगत्य तं नमस्कृत्य फलानि समर्पयितुम् आरब्धवन्तः। एवम् आगतान् संन्यासी उक्तवान्– "सूर्यास्तसमये भवन्तः सर्वे अत्र आगच्छन्तु। अहं भक्ति-ज्ञान-वैराग्य-मोक्षादीनां विषये विस्तरेण वदिष्यामि" इति।

ततः पूर्वदिने तत्र वृष्टिः आगता आसीत्। अतः सर्वे ग्रामीणाः कर्षणादिकार्येषु व्यापृताः आसन्। तत्कारणतः सूर्यास्तसमये एकः एव कृषिकः तत्र आगतवान्। नमस्कृत्य संन्यासिनः पुरतः उपविष्टवान् च।

'बहवः आगच्छेयुः' इति आलोचितवान् संन्यासी इदानीं निराशया उक्तवान्– "ग्रामीणानां पुरतः उत्तमः वेदान्तविचारः उपस्थापनीयः इति मम इच्छा आसीत्। किन्तु भवान् एकः एव उपस्थितः। भवन्तं वेदान्तविचारं बोधयामि वा?" इति।

तदा कृषिकः उक्तवान्– "स्वामिन्! अहं यदा बहूनां पशूनां निमित्तम् आहारं नयामि, तदा गोष्ठे एकः पशुः अस्ति चेदपि तस्मै आहारं तु ददामि एव" इति।

एतेन उत्तरेण तृप्तः संन्यासी घण्टाद्वयं यावत् भक्ति-कर्म-ज्ञान-वैराग्य-मोक्षादीनां विषये विस्तरेण उक्तवान्। अन्ते सः कृषिकं पृष्टवान्– "मम बोधनं कथम् आसीत्?" इति।

तदा कृषिकः विनयेन– "श्रीमन्! अहं बहूनां पशूनां निमित्तम् आहारं नयामि चेदपि सर्वम् एकस्य एव पुरतः न स्थापयामि" इति उक्त्वा उत्थाय ततः निर्गतवान्।





# अस्पृश्यता

चन्दनदेशं पूर्वं विभूतिमिश्रः नाम राजा पालयन् आसीत्। सत्यकथने सः हरिश्चन्द्रः इव इति जनाः वदन्ति स्म। एषा कीर्तिः न केवलं भूलोके, देवलोके अपि प्रसृता आसीत्।

कदाचित् देवलोके देवानां समावेशः प्रचलति स्म। तदा सभ्यः कश्चित् उत्थाय देवनायकम् उक्तवान्– "पूर्वं हरिश्चन्द्रस्य सत्यसन्धतायाः परीक्षार्थं महर्षिः विश्वामित्रः प्रयत्नं कृतवान्। इदानीं महाराजः विभूतिमिश्रः दातृत्वेन प्रसिद्धः अस्ति। एषा प्रसिद्धिः मिथ्या स्यात् वा इति मम सन्देहः। कृतयुगीयः हरिश्चन्द्रः इव कोऽपि कलियुगे व्यवहर्तुं शक्नोति किम्? यथाकथम् अपि वा भवतु, तस्य परीक्षणम् उचितम् इति मम अभिप्रायः। ज्येष्ठाः एतद्विषये चिन्तयन्तु" इति।

देवाः सर्वे एतं प्रस्तावम् अङ्गीकृतवन्तः। अनन्तरं ते विभूतिमिश्रस्य परीक्षार्थम् एकं देवदूतं चन्दनदेशं प्रति प्रेषितवन्तः।

सः देवदूतः मानवरूपं धृत्वा सत्यमूर्तिः इति आत्मानं परिचाययन् चन्दनदेशे सञ्चरन् "अहं सत्यकथने अद्वितीयः" इति वदति स्म। एवं स्वप्रचारं कुर्वन् सः अत्र प्रमाणानि अपि प्रदर्शयति स्म।

कदाचित् सः कस्मिंश्चित् ग्रामे सञ्चरन् तत्रत्यान् मेलयित्वा उक्तवान्– "काचित् दिव्यशक्तिः अन्यैः अज्ञातान् बहून् विषयान् मम कर्णे सूचयति। तदनुगुणम् अहं विषयान् प्रकाशयामि। भूषणस्य गृहस्य पृष्ठतः भूमौ अमूल्यः निधिः निहितः अस्ति। तस्य विषये न केवलं भूषणस्य, अपि तु सर्वेषाम् अपि अधिकारः अस्ति। अतः एतं विषयं सर्वेषां पुरतः प्रकाशितवान्" इति।

सत्यमूर्तिः यथा उक्तवान् तथा जनाः



भूषणस्य गृहस्य पृष्ठतः खननं कृतवन्तः। तत्र वस्तुतः अपि निधिः आसीत्। अनिवार्यतया भूषणः तं निधिं विभज्य सर्वेभ्यः दत्तवान्। एतेन सर्वे सन्तोषं प्राप्तवन्तः।

एतादृश्यः घटनाः देशे बह्व्यः प्रवृत्ताः। अतः जनाः तं देवतुल्यं भावयन्ति स्म। बहवः सत्यमूर्तितः बहुधा लाभं प्राप्तवन्तः। तस्य कीर्तिः सर्वत्र प्रसृता।

किन्तु सत्यमूर्तेः एकः दुर्गणः नाम सः जातिभेदं प्रोत्साहयति स्म। सः जनान् वदति स्म– "ये पापं कृतवन्तः ते पापफलतः उत्तमां गतिं प्राप्तुं न शक्नुवन्ति। तादृशाः अनन्तरजन्मनि अस्पृश्यरूपेण जन्म प्राप्नुवन्ति। अस्पृश्यरूपेण सः जीवति चेदेव स्वस्य पापस्य उचितं दण्डनं प्राप्नोति। अतः तादृशैः अस्पृश्यैः एव भवितव्यम्। तेषाम् उद्धारार्थं प्रयत्नः अनुचितः, धर्मविरुद्धः च" इति।

चन्दनदेशस्य राजा विभूतिमिश्रः अस्पृश्यतायाः निवारणार्थं बहुधा योजनाः करोति। जाति-मत-कुलभेदं विना सर्वैः व्यवहरणीयं, मानवाः सोदराः सर्वे इति भावनया जीवनीयम् इति तस्य राज्ये नियमः आसीत्। ये नियमभङ्गं कुर्वन्ति ते कठोरं दण्ड्यन्ते स्म। अतः चन्दनदेशस्थाः जनाः अस्पृश्यतां विस्मरन्तः आसन्।

एवं विभूतिमिश्रः स्वदेशात् कुरीतीनां निवारणार्थं बहुधा प्रयत्नं कुर्वन् आसीत्। किन्तु तस्य देशात् अस्पृश्यता पूर्णतः निर्गता इति न। नियमभङ्गं यः करोति सः दण्डम् अनुभवति इति भीतिः अस्तीत्यतः जनाः केचन अस्पृश्यतां सधैर्यम् अप्रतिपादयन्तः अपि मनसि तद्विषये विश्वासं स्थापितवन्तः आसन्। सत्यमूर्तेः वादः तादृशान् प्रोत्साहयतिं स्म। अतः देशे अस्पृश्यता पुनरपि स्फुटतया दृश्यमाना जाता।

एषा वार्ता विभूतिमिश्रेण अल्पे एव काले ज्ञाता। सत्यमूर्तिः एव अत्र कारणं इति ज्ञातवान् सः। अतः सः तद्दिने एव दूतम् आज्ञापितवान् यत् सत्यमूर्तिः मत्समीपम् आनेतव्यः इति।

राजाज्ञां श्रुत्वा सत्यमूर्तिः भटम्

उक्तवान्– "अहं प्रजासेवकः। प्रजासेवां परित्यज्य कुत्रापि गन्तुं न इच्छामि अहम्। प्रजासेवकेन राजाज्ञा पालनीया एव इति नास्ति। अतः अहं भवतः राज्ञः आज्ञां न पालयामि। यदि सः मया सह वार्तालापम् इच्छेत् तर्हि स्वयं मत्समीपम् आगच्छतु नाम" इति।

दूतः विभूतिमिश्रं दृष्ट्वा सत्यमूर्तेः वचनं श्रावितवान्। एतेन राजा ज्ञातवान् यत् सत्यमूर्तिः न सामान्यः इति। सः तद्दिने एव सत्यमूर्तेः आश्रमम् आगतवान्। आश्रमस्य पुरतः वटवृक्षस्य अधः उपविष्टः आसीत् सत्यमूर्तिः। पद्मासने उपविष्टं गम्भीरवदनं तं परितः बहवः जनाः उपविष्टवन्तः आसन्।

विभूतिमिश्रः गाम्भीर्येण सत्यमूर्तेः समीपं गत्वा नमस्कारम् अकुर्वन् तम् उक्तवान्– "अहम् एतस्य देशस्य राजा विभूतिमिश्रः अस्मि" इति।

सत्यमूर्तिः मन्दहासपूर्वकं पृष्टवान्– "अये राजन्! भवतः अहङ्कारः स्फुटं दृश्यते। सत्पुरुषाः नमस्करणीयाः इत्यपि न जानाति वा भवान्?" इति।

तदा विभूतिमिश्रः अपि मन्दहासपूर्वकम् उक्तवान्– "मानवेषु भेदभावं यः कल्पयति सः सत्पुरुषः भवितुं न अर्हति। अस्पृश्यता न देवेन सृष्टा, अपि तु मानवेन। ताम् अहितकरीम् अस्पृश्यतां भवान् प्रोत्साहयन् अस्ति। अतः भवन्तं कदापि न नमस्करोमि अहम्" इति।

"अये मूर्खराज! वेदेषु स्मृत्यादिषु च





अस्पृश्यता प्रतिपादिता अस्ति। अहं ताम् एव भावनां जनेषु उद्बोधयन् अस्मि। वस्तुतः भवान् एव शास्त्रविरोधी। वेदान् एव अपमानयन् अस्ति भवान्" इति उक्तवान् सत्यमूर्तिः।

"वेदस्मृत्यादयः अस्पृश्यतां प्रतिपादयन्ति इति तु पामराणाम् अल्पज्ञानिनां च वचनं स्यात्। जन्मना श्रेष्ठत्वं न सिध्यति, अपि तु कर्मणा इति हि शास्त्राणां सारः। नीचकुले जातः अपि सद्व्यवहारेण लोके उत्तमतां प्राप्तुम् अर्हति। भवादृशाः स्वार्थिनः वेदादीनाम् अपव्याख्यान कुर्वन्तः कुरीतीः प्रोत्साहयन्ति। एतस्य देशस्य राजा अहं वदन् अस्मि– दोषम् अङ्गीकृत्य क्षमायाचनां करोतु इति" इति उक्तवान् विभूतिमिश्रः।

सत्यमूर्तिः विभूतिमिश्रं कोपेन पश्यन्– "मां किमिति भावयति भवान्? दिव्यशक्तयः सन्ति मम। पश्यतु तावत्" इति वदन् वायौ हस्तं प्रसारितवान्। सर्वेषु पश्यत्सु, आकाशात् सर्पाः धाराकारेण पतिताः, इक्षुदण्डरूपेण परिवृत्ताः च। एवम् एव कुतश्चित् कश्चन व्याघ्रः गर्जन् तत्र आगतः। सत्यमूर्तेः हस्तस्पर्शेन मार्जारशिशुरूपेण परिवृत्तः च। आकाशात् पतिताः शिलाखण्डाः पुष्परूपेण परिवृत्ताः।

एतत् सर्वं दृष्ट्वा विभूतिमिश्रः उक्तवान्– "भवान् अपूर्वशक्तिमान् स्यात् नाम। किन्तु महात्मा तु सर्वथा न। यः अस्पृश्यतां समर्थयति सः कथं वा महात्मा भवितुम् अर्हति? भवान् केनापि दुरुद्देशेन अत्र आगतः इति अहं भावयामि। अतः एव जातिभेतं समर्थयन् जनेषु दुर्भावं जनयन् अस्ति। जनानां वशीकरणार्थम् इन्द्रजाल-विद्यां प्रदर्शयति। ऐन्द्रजालिकस्य भवतः माहात्म्यं किमपि नास्ति एव" इति।

"अये राजन्! स्थगयतु भवतः असम्बद्धप्रलापम्" इति वदन् सत्यमूर्तिः कोपेन गर्जितवान्– "भोः, सत्यसन्धः अहं हरिश्चन्द्रः इव इत्यत्र अत्र सम्मिलिताः जनाः एव प्रमाणम्" इति।

"भवतः कोपवचनेभ्यः अहं भीतः न भवामि। जनाः केचन समर्थयन्ति चेत् अपि अहं भवतः माहात्म्यविषये न विश्वसिमि।

इन्द्रजालविद्यायाः प्रदर्शनेन मां वञ्चयितुं न अर्हति भवान्। योग्यं प्रमाणं दर्शनीयं भवति भवता'' इति उक्तवान् विभूतिमिश्रः।

एतत् श्रुत्वा सत्यमूर्तिः उच्चैः हसन् उक्तवान्– ''प्रत्यक्षं प्रमाणम् इच्छति वा भवान्? तर्हि मया यथा उच्यते तथा करोतु। श्वः एकं दिनं यावत् अस्पृश्यानां मध्ये निवसतु। तदा अस्पृश्यैः पापफलतः एव तादृशं जन्म प्राप्तम् इति अंशं भवान् रात्रौ स्वप्ने स्वयं ज्ञास्यति। अनन्तरदिने स्वप्ने यत् सत्यं दृष्टं तत् सर्वान् वदतु'' इति।

''अस्तु तावत्। भवान् यथा वदति तथैव करोमि'' इति अङ्गीकृतवान् विभूतिमिश्रः।

''एकं तु स्मरतु– भवान् असत्यं किमपि वदिष्यति चेत् घोरेण चर्मव्याधिना ग्रस्तः भविष्यति'' इति सूचितवान् सत्यमूर्तिः।

''भवता यत् उच्यते तत् अयुक्तम् इति प्रमाणितं भवति चेत् ...?'' इति सत्यमूर्तिं पृष्टवान् विभूतिमिश्रः।

''तदा अहं तत्क्षणे एव एतस्मात् राज्यात् अदृश्यः भूत्वा निर्गमिष्यामि'' इति उक्तवान् सत्यमूर्तिः।

ततः निर्गतः विभूतिमिश्रः अस्पृश्यानां परिस्थितिं सम्यक् परिशीलितवान्। इतोऽपि बहवः कष्टे अज्ञाने च सन्ति इति सः ज्ञातवान्। सः तान् उक्तवान्– ''मम प्रजाः भवन्तः मम बान्धवाः चापि। राजा अहं भवतां दुर्गतिं सर्वथा न इच्छामि। श्वः एव भवतां कष्टस्य निवारणार्थं नूतनाः योजनाः रचयिष्यामि। मम राज्ये जातिभेदः सर्वथा न





भवेत्'' इति।

तदा ते उक्तवन्तः– ''प्रभो! भवतः दयया वयम् इदानीं सुखेन जीवामः इति तु सत्यम् एव। किन्तु दैवांशसम्भूतस्य सत्यमूर्तेः वचनं तिरस्कर्तुं न अर्हामः वयम्। दैवशापात् वयम् एतस्मिन् कुले जाताः। वयम् एवम् एव तिष्ठामः। भवान् अस्माकं विषये कमपि प्रयत्नं मा करोतु कृपया'' इति।

''भवन्तः शास्त्रादिकं न जानन्ति इत्यतः अन्यस्य वचने विश्वसन्ति यत् तत् तु सहजम् एव। अहं सर्वाणि शास्त्राणि परिशीलितवान् अस्मि। तत्र कुत्रापि अस्पृश्यता न प्रतिपादिता। स्वार्थिनः केचन शास्त्रविरुद्धम् अर्थं प्रतिपादयन्ति। सत्यमूर्तिः अपि तादृशः एव स्यात्। तस्य वचनेषु न विश्वसितव्यम्'' इति तान् बोधितवान् विभूतिमिश्रः। अन्नपानादिकं तैः सह एव कुर्वन् रात्रौ तैः सह एव सुप्तवान् सः।

निद्रायां सः एकं दिव्यपुरुषं दृष्टवान्। सः दिव्यपुरुषः विभूतिमिश्रम् उक्तवान्– ''अये मूर्खराज! अस्पृश्यता देवेन सृष्टा। नरके पापिनां सङ्ख्या अधिका जाता इत्यतः देवः कश्चन जनान् भूलोके अस्पृश्यान् कृतवान्। यथा नरके स्थित्या कालान्तरे मोक्षः प्राप्यते तथैव अस्पृश्यतायाः अनुभवेन सद्गतिः लप्स्यते। एषा वस्तुस्थितिः। श्वः एतां वस्तुस्थितिं सर्वान् बोधयतु। तथा कृतं चेत् एतावता भवता यत् धर्मविरुद्धम् आचरणं कृतं तत् क्षाम्यामि अहम्। भवतः हितार्थम् एव एतत् उक्तवान् अस्मि'' इति।

''अहं स्वप्नविचारं गोपयन् अन्यथा वदामि चेत् किं भवेत्?'' इति तं पृष्टवान् विभूतिमिश्रः।

''तदा भवान् घोरेण चर्मव्याधिना ग्रस्तः भवेत्। भवान् अपि अस्पृश्येषु अन्यतमः सन् नरकसदृशं जीवनं यापयेत्। अन्यच्च सत्यसन्धः भवान् हरिश्चन्द्रः इव इति कीर्तिं सम्पादितवान् अस्ति। असत्यं वदन् किम् अपकीर्तिं दुर्गतिं च प्राप्तुम् इच्छति? युक्तायुक्तताविवेकः अस्ति खलु भवतः?'' इति अवदत् सः दिव्यपुरुषः।

''अये दिव्यपुरुष! मम उन्नत्यर्थं भवता

मार्गः प्रदर्शनीयः आसीत्। भवान् तु मानवे मयि दानवत्वं पूरयन् अस्ति। यः मम मानवत्वं दूरीकर्तुम् इच्छति तादृशे भवति मम गौरवबुद्धिः सर्वथा नास्ति। अतः भवतः वचनम् अहं न पालयामि" इति दृढस्वरेण उक्तवान् विभूतिमिश्रः।

अनन्तरं विभूतिमिश्रः जागरितः। सः स्वप्नं स्मरन् कुलदेवतां प्रार्थितवान्– "देवि! प्रजानां हितार्थम् अहम् असत्यं वक्तुं निश्चितवान् अस्मि। तेन यदि घोरः चर्मव्याधिः मां बाधेत तर्हि अहं सोढुं सिद्धः एव। स च रोगः बहिः यथा न दृश्येत तथा वरेण माम् अनुगृह्णातु भवती" इति। कुलदेवता माम् अनुग्रहीष्यति एव इति निश्चित्य सः सन्तोषेण एव स्थितवान्।

प्रातःकालानन्तरं विभूतिमिश्रः नद्यां स्नात्वा सत्यमूर्तेः आश्रमं गतवान्। तत्र सम्मिलितान् उद्दिश्य उक्तवान् च– "रात्रौ स्वप्ने श्रीमन्नारायणः प्रत्यक्षः आसीत्। तेन सूचितं यत् अस्पृश्यता महापापं, सत्यमूर्तिश्च राक्षसांशात् उत्पन्नः सन् जनान् वञ्चयन् अस्ति इति" इति।

अनन्तरक्षणे एव सत्यमूर्तिः अदृश्यतां गतः। जनाः 'विभूतिमिश्रः जयतात्' इति जयघोषं कृतवन्तः। विभूतिमिश्रः केनापि चर्मव्याधिना अपि पीडितः न जातः। 'महत् कण्टकम् अपगतम्' इति जनाः भावितवन्तः।

अनन्तररात्रौ स एव दिव्यपुरुषः विभूतिमिश्रस्य स्वप्ने प्रत्यक्षीभूय– "अये राजन्! प्रजानां हितार्थं चर्मव्याधिं सोढुं कीर्तिं चापि परित्यक्तुं सिद्धः जातः आसीत् भवान्। भवतः एतं गुणं वयं सर्वे प्रशंसामः। स्वार्थरहितं भवन्तं, न केवलम् अहं, सर्वे देवाः चापि नमस्कुर्वन्ति। अस्पृश्यता देवेन न सृष्टा इति तु त्रिकालाबाधितं सत्यम्। भवतः परीक्षार्थं मानवरूपेण आगतः अहम् अस्पृश्यतां प्रतिपादितवान्, तावदेव। भवतः राज्ये सर्वसमानभावः सदा तिष्ठतु। लोकरञ्जकः भवतु भवान्" इति उक्त्वा अदृश्यः अभवत्।



# अनपेक्षितकथनम्

कदाचित् धनिकः शिवराजः तीव्रम् अस्वस्थः जातः। वैद्यः धन्वन्तरिः तस्य चिकित्सां करोति। एकदा शिवराजः धन्वन्तरिम् उक्तवान्– "एषः रोगः यः मां बाधते ततः न केवलं शरीरस्य हानिः, अपि तु बुद्धौ अपि विकारः दृश्यते। यत् वक्तव्यं तत् वक्तुं न शक्नोमि। अनपेक्षितं वदामि कदाचित्" इति।

"चिन्तां मा करोतु। सर्वविधप्रयत्नेन भवतः रोगं निवारयिष्यामि एव" इति उक्तवान् वैद्यः।

"वस्तुतः अपि शक्यं वा एतत्? भवान् यदि तथा कुर्यात् तर्हि भवतः चिकित्सालयार्थं दानरूपेण लक्षं रूप्यकाणि दास्यामि" इति उक्तवान् शिवराजः।

कानिचन दिनानि अतीतानि। धनिकः रोगात् मुक्तः जातः। एकदा वैद्यः तम् उक्तवान्– "श्रीमन्! अहं किञ्चित् स्मारयितुम् इच्छामि। रोगः अपगतः चेत् लक्षं रूप्यकाणि चिकित्सालयार्थं ददामि इति उक्तवान् आसीत् भवान्" इति।

"सत्यम् ...। रोगसन्दर्भे मम दौर्बल्यम् आसीत् यत् अपेक्षितं वक्तुम् अशक्नुवन् अहम् अनपेक्षितं सदा वदामि स्म" इति उक्तवान् धनिकः शिवराजः।






# ३

आपणतः प्रस्थितः सत्यनारायणः यावत् गृहं प्राप्तवान् तावता अन्धकारः प्रसृतः आसीत्। गृहे दीपाः प्रकाशन्ते स्म।

गृहस्य पार्श्वभागतः अन्धकारमयात् प्रदेशात् आगतः कश्चन षीष्कारः श्रुतः सत्यनारायणेन। सुपरिचितं तं षीष्कारं श्रुतवतः तस्य सन्तोषः प्रवृद्धः। 'एषः षीष्कारः मित्रस्य रङ्गस्य एव' इति निश्चित्य सः उत्तररूपेण षीष्कारं कर्तुं प्रयत्नं कृतवान्। किन्तु 'फू-हू' इति कश्चन ध्वनिः मुखात् निर्गतः, न तु षीष्कारः। 'धिक् माम्' इति आत्मानं निन्दितवान् सः।

एतावता सः रङ्गस्य समीपम् आगतः आसीत्। समीपम् आगतम् एतम् आश्चर्येण पश्यति रङ्गः। मन्दप्रकाशे स्थूलं शरीरं, पलितं श्मश्रु, उपनेत्रं, केशरहितं शिरः च तेन दृष्टम्।

सत्यनारायणः पुनरपि द्वित्राणि पदानि अग्रे गत्वा– "किमर्थं तथा पश्यति? अहं भोः उपस्थितोऽस्मि" इति उक्तवान्। 'आगतः सत्यनारायणस्य पिता' इति ज्ञातवतः रङ्गस्य हृदयं क्षणकालं स्तब्धम् इव।

'रङ्गस्य स्नेहः सर्वथा मास्तु' इति एषः एव पूर्वं सत्यनारायणं तर्जनपूर्वकं बोधितवान् आसीत्। तथापि रङ्गेण सह गतवन्तं तं ताडितवान् आसीत् अपि। अतः एव रङ्गः सत्यनारायणस्य आह्वानार्थं गृहस्य अन्तः पुरतः वा न गच्छति। पार्श्वे कुत्रापि स्थित्वा



"किमपि नास्ति भोः" इति वदन् सत्यनारायणः त्वरया गृहस्य अन्तः गतवान्।

कर्मकरः सर्वाणि वस्तूनि गृहे स्थापयित्वा गतवान् आसीत्। सीता तत्तदुचिते स्थाने वस्तूनां स्थापने मग्ना आसीत्।

रात्रौ सत्यनारायणः पितुः शय्यायाम् एव शयनं कृतवान्। तस्यां रात्रौ तेन समीचीना निद्रा न प्राप्ता। इतः पूर्वं सः शयनसमनन्तरम् एव गाढनिद्रां प्राप्नोति स्म। प्रातःकालपर्यन्तम् अखण्डा निद्रा! किन्तु अद्य न तथा। निद्राप्राप्तौ एव विलम्बः। अनन्तरम् अपि न गाढता। पुनः पुनः जागरणं भवति स्म। रात्रौ पुनः पुनः पार्श्वपरिवर्तनं कुर्वन् समयं यापितवान् सः। उषःकालात् पूर्वम् एव जागरणं प्राप्तं तेन।

शय्यातः उत्थितः सः किं करणीयम् इति अजानन् गृहे इतस्ततः सञ्चारं कृतवान्। पार्श्वप्रकोष्ठं गत्वा दर्पणे स्वस्य पलितं श्मश्रु, केशरहितं शिरः च द्रष्टुं प्रयत्नं कृतवान्। उपनेत्रस्य अभावतः सः सुस्पष्टं द्रष्टुं न शक्तवान्।

मनसि विविधाः चिन्ताः सन्ति चेदपि सूर्यः तु शीघ्रं शयनं कृत्वा गाढनिद्रां प्राप्तवान्। सूर्यकिरणाः उदिताः चेदपि सः न उत्थितवान्। अल्पवयस्कं शरीरं खलु तस्य?

अत्रान्तरे शालातः कश्चन बालकः आगतवान्। सत्यनारायणं सः सम्यक् जानाति। तथापि सत्यनारायणः वेषान्तरेण आत्मानं निगूह्य षीष्कारेण आगमनं सूचयति। एतस्य तात्पर्यं जानन् सत्यनारायणः मन्दं बहिः आगच्छति। एषः दैनन्दिनः क्रमः। 'अद्य तु रहस्यम् उद्घाटितम् अभवत्, यतः सूर्यः एव उपस्थितः अस्ति' इति आलोच्य भीतः रङ्गः ततः पलायनं कृतवान्।

"भोः, किमर्थं तथा धावति भवान्? कुतः भीतिः भवतः? मूर्ख! आगच्छतु अत्र" इति उच्चस्वरेण आहूतवान् सत्यनारायणः।

"किं श्रीमन्? तं बालकं तथा उच्चैः आह्वयति? किं कृतं तेन?" इति वदन् कश्चित् तत्र आगतवान्। 'इतःपरं मार्गे स्थितिः उचिता न भवेत्' इति आलोच्य

अस्ति इत्यतः परिचयम् अप्राप्नुवन् उक्तवान्– "भवतः पुत्रः सत्यनारायणः कुत्र? 'तम् आनयतु' इति उक्त्वा अध्यापकः मां प्रेषितवान्" इति।

शयनात् उत्थितः सूर्यः पूर्वाभ्यासानुगुणं पाचिकां सीताम् आहूतवान्। तस्य आह्वानं श्रुत्वा अपि सीता प्रत्युत्तरं न दत्तवती। अत्रान्तरे अन्तः एव आगतः शालाबालकः सूर्यं दृष्ट्वा– "भोः, अविलम्बेन भवन्तम् आनेतुं सूचितवान् अस्ति अध्यापकः" इति उक्तवान्।

"अहो! साक्षात् अन्तः एव आगतः अयं वराकः। अये, निर्गच्छतु इतः। अध्यापकम् एव अत्र आगन्तुं वदतु" इति असमाधानेन उक्तवान् सूर्यः।

किन्तु तस्य असमाधानं को वा गणयति? शालातः आगतः सः बालकः दृढकायः, धीरः च। इतरे बालकाः सर्वे तस्य दर्शनात् भीताः भवन्ति। यः कोऽपि शालां न आगतः चेत् एतम् एव प्रेषयति अध्यापकः। तेन बलात् आकृष्य नीयमानः सूर्यः अनिवार्यतया शालां गतवान्।

सूर्यं दृष्ट्वा अध्यापकः महता कोपेन दण्डम् उन्नीय– "अये उद्धत! शालां प्रति आगमनं स्मारणीयं खलु? हस्तं प्रसारयतु तावत्" इति वदन् तस्य हस्ते ताडनानि दत्तवान्। तं भित्तेः पार्श्वे आसन्दाकारेण उपवेश्य– "अये! भवतः पिता तु परमसज्जनः। तादृशस्य पुत्रः भवान् एवम् आचरति खलु! कुलकलङ्क! भवतः दौष्ट्यं





रटनम् अतिशेते स्म अयं कोलाहलः। अध्यापकः तु 'कोऽपि कोलाहलं न कुर्यात्' इति आज्ञाप्य भित्तिम् आलम्ब्य नेत्रे निमील्य, मुखं किञ्चित् उद्घाट्य निद्रां कृतवान्। इहप्रपञ्चं विस्मृतवतः तस्य मुखात् 'घुर् घुर्' इति शब्दः निस्सरति स्म।

अध्यापकं निद्रामग्नं निश्चित्य सर्वे बालकाः सूर्यं परितः आगत्य स्थितवन्तः। सूर्यः तु तेषु कमपि नाम्ना अपि न जानाति। एषः धाष्ट्र्यकारणतः अस्माभिः सह सम्भाषणं न करोति इति चिन्तयन्ति ते। अतः ते तं पीडयितुम् आरब्धवन्तः। एकः कर्णलुण्ठनं करोति। अपरः पृष्ठभागे ताडयति। अन्यः शिरसि कुट्टयति। इतरः हस्तम् आकर्षति। बालानाम् एतादृशीं पीडां दृष्ट्वा सूर्यः नितरां कुपितः। अन्ते वेदनाम् असहमानः सः उच्चैः आक्रन्दनं कृतवान्। 'इदानीम् अध्यापकः उत्तिष्ठति' इति जानन्तः सर्वे बालकाः स्वस्थाने मौनम् उपविष्टवन्तः।

आक्रन्दनश्रवणेन अध्यापकः जागरितः अभवत्। 'कुतः आक्रन्दनम् आगतम्?' इति सः परितः दृष्टिं प्रसारितवान्। आसनात् उत्थाय दण्डेन सूर्यं सम्यक् ताडयित्वा– 'न जाने पशुः अयं किं वा पठेत् इति' इति उद्गारं प्रकटितवान्।

ताडनेन निन्दनेन च कुपितः सूर्यः– ''अये अध्यापकापसद! शालायां निद्रां कुर्वन् कीदृशः शिक्षकः भवान्? ताडनं विना भवान् प्रवर्धमानम् अस्ति। कतिविधानि दण्डनानि अहं जानामि इति परिचाययामि अद्य'' इति सम्यक् निन्दितवान्।

एतत् श्रुतवतः सूर्यस्य नेत्राभ्याम् अश्रूणि आगतानि। किन्तु किं वा कर्तुं शक्येत, सर्वं मौनम् अनुभोक्तव्यं तेन।

शिक्षकस्य पाठनवैखरीं, बालानां पठनपद्धतिं, चटुलतां च दृष्ट्वा आश्चर्यम् अनुभवति सूर्यः। 'कीदृशः अध्यापकः एषः! अहो, कीदृशाः छात्राः एते! सत्यनारायणः एतादृशे नीरसे परिसरे निरर्थकं पठनं कुर्वन् अस्ति वा? अहो दौर्भाग्यम्!'

किञ्चित्कालानन्तरं सर्वे छात्राः समूहरूपेण गुणनमालां रटितवन्तः। यावन्तः छात्राः तावन्तः स्वराः पृथक् श्रूयन्ते! काकानां

किमपि अन्यत् जानाति वा? मुग्धान् बालान् विनाकारणं निर्दयं ताडयति खलु? चण्डाल! नरकं गमिष्यति भवान्" इति अध्यापकं निरन्तरं तर्जितवान्।

एतत् श्रुत्वा कक्ष्यायां स्थिताः सर्वे बालकाः उच्चैः हसितवन्तः। क्रुद्धः अध्यापकः तीक्ष्णदृष्ट्या सूर्यं पश्यन्– "अये दुष्ट! माम् उपदिशति वा? भवतः मदम् अपनयामि अद्य। पुनरपि आसन्दाकारेण उपविशतु तावत्" इति वदन् तं आसन्दाकारेण उपवेशितवान्।

एतावता अपि अध्यापकः न तृप्तः। सः पुस्तकम् उद्घाट्य एकैकशः प्रश्नान् प्रष्टुम् आरब्धवान्। सामान्यज्ञानाधारितानां बहूनां प्रश्नानाम् उत्तरं दत्तवान् सूर्यः। आश्चर्यम् अनुभवन् अध्यापकः कठिनान् प्रश्नान् पृष्टवान्। पुस्तकाध्ययनं विना तेषाम् उत्तरदानम् असाध्यम् आसीत्। अतः मौनं स्थितवान् सूर्यः। 'प्रश्नानाम् उत्तरं न जानाति वा भवान्?' इति वदन् पुनः ताडितवान् अध्यापकः।

एतदनन्तरं गणितविषये प्रश्नाः आरब्धाः। प्राथमिकांशसम्बद्धानां प्रश्नानाम् उत्तरं लीलया उक्तवान् सूर्यः। 'गणिते सर्वथा अज्ञः अयम् अद्य कथं सर्वेषां प्रश्नानाम् उत्तरं वदति?' इति आश्चर्यम् अनुभवति अध्यापकः।

"अये! उद्धत! गणिते एतावत् परिज्ञानम् अस्ति भवतः। तथापि एतावत्पर्यन्तं मौढ्यं प्रदर्शयन् मां वञ्चयति स्म खलु?" इति वदन्



अध्यापकः पुनः ताडितवान्।

'कदा मध्याह्नः भवेत्? कदा घण्टावादनं स्यात्? कदा वा शालातः विमोचनं स्यात्?' इति प्रतीक्षमाणः अस्ति सूर्यः। अन्ते घण्टा वादिता। अध्यापकः उत्थाय गतवान्। छात्राः अपि केचन गृहं प्रति धावितवन्तः। अन्ये केचन निश्चिन्ताः सन्तः मन्दगत्या प्रस्थितवन्तः। किन्तु ते सर्वे उत्साहेन सन्ति। सूर्यः एकः एव निरुत्साहेन अस्ति।

सामान्यतः बालाः शालायां प्राप्तं ताडनम् अवमाननं वा बहिः आगत्य सर्वथा विस्मरन्ति। किन्तु सूर्यः तु मनसा प्रौढः खलु? सः आत्मना प्राप्तम् अवमाननं विस्मर्तुं न शक्नोति। चिन्तया मन्दम् आगच्छन्तं सूर्यं परितः स्थित्वा केचन बालकाः– "अये सत्य! भवतः किं जातम्? किम् अस्वस्थः? उत अस्माकम् उपरि कोपः? नूतनः पुरुषः इव लक्ष्यते भवान्। सर्वथा भिन्नः अस्ति भवतः व्यवहारः" इति उक्तवन्तः।

"आम्, अहं नूतनः। अहं सत्यनारायणः न। मां न पीडयन्तु। गच्छन्तु इतः" इति तान् उक्तवान् सूर्यः।

बालकाः आश्चर्येण भीत्या च सूर्यं पश्यन्तः एकैकशः ततः दूरं गतवन्तः। सूर्यः मौनं गृहं गच्छन् आलोचयति– 'गृहं गत्वा किं करोमि? गृहे इदानीं सत्यनारायणः किं कुर्वन् स्यात्? एतावता तस्य रहस्यं प्रकटितं स्यात् वा?' इति।

एतादृश्या आलोचनया तस्य आशा उज्जीविता। 'अहम् आत्मानं सूर्यं वदामि चेत् कोऽपि न विश्वसिति। सर्वे सत्यनारायणं मां भावयन्तः सन्ति। एतावता मम आत्मीयाः बहवः सत्यनारायणसमीपम् आगताः स्युः। व्यावहारिकविषयेषु वार्तालापं कृतवन्तः स्युः। तेषु विषयेषु सत्यनारायणः किं वा जानाति? अतः एतावता तदीयं रहस्यं प्रकटितं स्यादेव। तथा चेत् मदीयं रहस्यम् अपि निरूपितं भविष्यति' इति आलोचयन् सः उत्साहेन गृहं प्राप्तवान्।

– (अग्रिमसञ्चिकायां समाप्ता भविष्यति।)






# जयशीलस्य निर्णयः

'मानवः यदि इच्छेत् तर्हि यां कामपि शक्तिं वशीकर्तुं शक्नुयात्। एवं स्थिते एतस्याः वेतालशक्तेः वशीकरणं किं कष्टकरम्?' इति आलोचयन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! एतादृशे घोरे मध्यरात्रे भवान् यत् श्रमं निर्वहति तत् तु आश्चर्यकरम् एव। कः भवन्तम् एतस्मिन् कार्ये नियोजितवान्? सः कीदृशः स्यात्? कार्यसिद्धिपर्यन्तम् अपि भवान् दृढतया तिष्ठेत् वा न वा इति सन्देहः मम। यतः मानवस्य बुद्धिः अतीव चञ्चला। तत्रापि राजवंशीयस्य बुद्धिः नितरां चञ्चला। अत्र उदाहरणरूपेण वधूचयने चाञ्चल्यं प्रदर्शितवतः विजयपुर्याः युवराजस्य जयशीलस्य कथां श्रावयामि।

## वेतालकथा



कथां शृण्वतः गच्छतः भवतः मार्गायासः निश्चयेन परिहृतः भविष्यति'' इति।

अनन्तरं वेतालेन कथा आरब्धा –

महेन्द्रवर्मा विजयपुर्याः राजा। जयशीलः तस्य अद्वितीयः पुत्रः। कदाचित् महेन्द्रवर्मा पुत्रं जयशीलं स्वप्रकोष्ठम् आहूय उक्तवान्– ''प्रिय वत्स, जयशील! राजवंशानुगुणं सर्वासु विद्यासु अपि पारङ्गतः अस्ति भवान्। तेन अहं सन्तुष्टः अस्मि। इतः परं भवतः विवाहः करणीयः इति मम विचारः अस्ति। स्नुषात्वेन या आगमिष्यति सा दयामयी, उत्तमगुणवती च भवेत् इति मम आशयः। अकस्मात् तादृशी गुणवती राजवंशीया न चेत् अपि मम तु कोऽपि खेदः नास्ति'' इति।

तदा जयशीलः पृष्टवान्– ''भवतः वचनस्य श्रवणेन ज्ञायते यत् काचित् भवता स्नुषात्वेन निश्चिता स्यात् इति। तादृशी काऽपि अस्ति वा भवतः मनसि?'' इति।

''तथा नास्ति इति न। मम बाल्यस्नेहितः इन्द्रसेनः कात्यायिनीराज्यस्य महाराजः। तस्य पुत्री वैजयन्ती यदा दशवर्षीया आसीत्, तदा मया दृष्टा आसीत्। अतीव सुन्दरी आसीत् सा। इदानीं सा विवाहवयस्का स्यात्। सर्वरीत्या अपि सा भवतः अनुरूपा पत्नी भवेत् इति चिन्तयामि। अतः भवान् कात्यायिनीराज्यं गत्वा तत्र राजभवने कानिचन दिनानि तिष्ठतु। युवराज्ञयाः स्वभावः कीदृशः इति परिशील्य आगच्छतु'' इति उक्तवान् महेन्द्रवर्मा।

तदा जयशीलः उक्तवान्– ''भवतु, तत्र गत्वा आगमिष्यामि। किन्तु अहं तत्र युवराजः जयशीलः इति आत्मानं न परिचाययामि। वणिग्रूपेण कात्यायिनीनगरे स्थातुं मह्यम् अनुमतिं ददातु। मम परिचयम् अनुक्त्वा कानिचन दिनानि तत्र स्थित्वा युवराज्ञयाः विषयं ज्ञात्वा आगमिष्यामि'' इति।

''भवतः चिन्तनम् उचितम् एव। यदि सा भवतः अनुरूपा स्यात् तर्हि मम अनुमतिनिमित्तं विलम्बं मा करोतु। तत्रैव तां परिणीय भवता सहैव आनयतु। गृहप्रवेशकार्यक्रमम् अत्र सवैभवं निर्वर्तयाम वयम्। गमनसमये एकाकी मा गच्छतु।

अङ्गरक्षकत्वेन भवता सह जनद्वयं नयतु'' इति उक्तवान् महेन्द्रवर्मा।

अनन्तरदिने एव जयशीलः, तस्य द्वौ अङ्गरक्षकौ च वणिग्रूपेण कात्यायिनीनगरं प्रति प्रस्थिताः। केषाञ्चन दिनानाम् अनन्तरं ते कात्यायिनीनगरं प्राप्य तत्र प्रकोष्ठद्वयं भाटकरूपेण स्वीकृतवन्तः। एकस्मिन् प्रकोष्ठे जयशीलः, अपरस्मिन् प्रकोष्ठे तस्य अङ्गरक्षकौ च स्थितवन्तः।

''वयं दूरदेशतः आगताः। नगरे प्रमुखैः वणिग्भिः सह सम्भाषणं कृत्वा अत्र वाणिज्यस्य आरम्भः करणीयः अस्ति। अतः अत्र वसतिगृहे वयं स्थितवन्तः'' इति वसतिगृहस्य यजमानम् उक्तवन्तः ते। ''तदर्थं योग्यां व्यवस्थां करोमि'' इति वसतिगृहस्य यजमानः तान् उक्तवान्।

वातावरणपरिवर्तनतः, अन्यकारणतः वा जयशीलः अनन्तरदिने एव ज्वरपीडितः अभवत्। दयालुः वसतिगृहस्य स्वामी जयशीलस्य परिस्थितिं ज्ञातवान्। 'अत्र शुश्रूषा सम्यक् न भवति' इति विचिन्त्य सः जयशीलं स्वगृहं नीतवान्। नगरस्य प्रख्यातं वैद्यम् आनायितवान् च।

वैद्यः जयशीलं परीक्ष्य– ''अत्यन्तं जागरूकतया एतस्य योगक्षेमः द्रष्टव्यः। यतः सेवकादीनां उपचारैः पालितं कोमलं शरीरम् एतस्य। इदानीं मया दीयमानम् औषधं प्रातःकालपर्यन्तं प्रतिघण्टम् अपि एकवारं



दातव्यम्। नो चेत् प्राणापायः एव स्यात्'' इति उक्त्वा औषधं दत्त्वा गतवान्।

वसतिगृहस्य यजमानस्य पत्नी न आसीत्। गृहे विवाहवयस्का तस्य पुत्री इन्दुमती आसीत्। वैद्येन यथा सूचितम् आसीत्, तथैव सा इन्दुमती प्रतिघण्टम् एकवारं जयशीलाय औषधं यच्छन्ती प्रातःकालपर्यन्तं निद्रामेव न कृतवती।

एवमेव सप्ताहं यावत् इन्दुमती अत्यन्तं श्रद्धापूर्वकं वैद्यस्य सूचनानुसारं औषध-पथ्यादीन् कारयन्ती जयशीलस्य योगक्षेमं दृष्टवती।

सप्तमे दिने ज्वरः शान्तः। किन्तु जयशीलस्य महती निश्शक्तिः। पुनः



एकसप्ताहानन्तरं जयशीलः पूर्णतः स्वस्थः जातः।

तावन्ति दिनानि अपि इन्दुमती तस्य पार्श्वे एव स्थित्वा अत्यन्तप्रीत्या जयशीलस्य उपचारं कृतवती। तस्याः करुणापूर्णहृदयम्, उत्तमगुणान्, सहनां च दृष्ट्वा जयशीलः अतीव सन्तुष्टः।

इन्दुमत्याः व्यवहारस्य सूक्ष्मपरिशीलनेन जयशीलः ज्ञातवान् यत् इन्दुमती मयि आसक्ता अस्ति इति। सः तदा पितुः वचनं, स्वस्य आगमनकारणं च स्मृतवान्।

अनन्तरदिने जयशीलः इन्दुमतीं स्वसमीपम् आहूय पृष्टवान्– "इन्दुमति! राजवंशीयः भवत्याः परिचितः कोऽपि अस्ति वा?" इति।

तदा इन्दुमती उक्तवती– "राजवंशीयाः सर्वेऽपि मम परिचिताः एव। युवराज्ञ्याः वैजयन्तीदेव्याः प्रियसखीषु अहम् अपि अन्यतमा। प्रतिदिनं राजभवनं गत्वा राजकुमार्या सह सम्भाषणं कृत्वा आगच्छामि। भवतः अनारोग्यकारणात् पञ्चदशभ्यः दिनेभ्यः मया राजभवनं प्रति न गतम् एव। इतःपरं गन्तुं शक्नोमि इति चिन्तयामि" इति।

"तर्हि भवत्या एकं साहाय्यं करणीयम्" इति उक्तवान् जयशीलः।

"किं तत् साहाय्यम्?" इति पृष्टवती इन्दुमती।

"भवत्याः राजकुमारी राजकुमारे कस्मिंश्चित् आसक्ता अस्ति वा? तस्याः प्रियसखी भवती एतत् जानीयात् एव। नो चेत् अपि ज्ञातुं शक्यते भवत्या। सः विषयः मया ज्ञातव्यः" इति उक्तवान् जयशीलः।

"तत् रहस्यं भवता किमर्थं ज्ञातव्यम्?" इति आश्चर्येण पृष्टवती इन्दुमती।

तदा जयशीलः अवदत्– "विजयपुर्याः युवराजः जयशीलः मम प्रियमित्रम्। सः भवत्याः युवराज्ञीं परिणेतुम् इच्छति। किन्तु इतोऽपि तेन अन्तिमनिर्णयः न कृतः। यतः युवराज्ञ्याः मनसि अन्यः कोऽपि स्यात् वा इति तस्य सन्देहः अस्ति। सा एतावत्पर्यन्तं कमपि न इष्टवती चेत् ताम् एव परिणेष्यामि

इति माम् उक्तवान् अस्ति मम स्नेहितः। अतः मया तत् रहस्यं ज्ञातव्यम्। अल्पे एव काले भवती एतत् ज्ञात्वा मां निवेदयितुं शक्नोति किल?" इति।

"एवं वा? एतावत्पर्यन्तं विवाहविषये तस्याः आशयः न ज्ञातः मया। दिनद्वयस्य अवकाशं ददातु। तावता अहं राजकुमार्या सह सम्भाषणं कृत्वा ज्ञात्वा आगमिष्यामि" इति उक्तवती इन्दुमती।

जयशीलः एतत् अङ्गीकृतवान्।

तस्मात् दिनात् आरभ्य सा पुनः राजभवनं गन्तुम् आरब्धवती। अनन्तरदिने सा राजभवनात् यदा गृहम् आगतवती तदा तस्याः पिता उक्तवान्– "इन्दुमति, अस्माकं गृहं प्रति अतिथित्वेन आगतः कः इति जानाति वा भवती? सः विजयपुर्याः युवराजः जयशीलः। तेन सह आगतौ तस्य अङ्गरक्षकौ। अङ्गरक्षकद्वारा एषः विषयः ज्ञातः मया" इति।

"एवं वा?" इति औदासीन्येन उक्तवती इन्दुमती। तस्यां कोऽपि उत्साहः वा कुतूहलं वा न आसीत्।

इन्दुमत्याः पिता पुनः आश्चर्यं प्रकटयन् उक्तवान्– "सः किमर्थं सामान्यवणिक् इव अस्माकं देशम् आगतवान् इति इदानीमपि न ज्ञातम्" इति।

"सः युवराजः चेत् किमर्थम् आगतः इति अहं जानामि। सः अस्माकं राजकुमारीं



परिणेतुम् इच्छति। किन्तु युवराज्ञ्याः मनसि अन्यः कोऽपि स्यात् वा इति तस्य सन्देहः। तदर्थं सः अत्र आगतः अस्ति। तं विषयं ज्ञात्वा आगच्छतु इति माम् उक्तवान् अस्ति। इदानीं भवतः वचनेन ज्ञायते यत् युवराज्ञ्याः मनसि यदि अन्यः नास्ति, तर्हि सः ताम् एव परिणेष्यति इति" इति पितरम् उक्तवती इन्दुमती।

"युवराज्ञ्याः विचारं भवती ज्ञात्वा आगतवती वा?" इति पृष्टवान् पिता।

"आम्। एतावत्पर्यन्तं तस्याः मनसि कोऽपि नास्ति इति ज्ञातम्" इति उक्तवती इन्दुमती।

तदा इन्दुमत्याः पिता उक्तवान्–



"महेन्द्रपुरस्य युवराजेन सह विक्रमपुर्याः युवराजेन सह च राजकुमार्याः महती मैत्री अस्ति इति अहं जानामि। तं विषयं भवती अपि जानाति एव। एतम् अंशं जयशीलं वदतु भवती। कोऽपि विषयः न गोपनीयः" इति।

"भवतु। तथैव वदामि" इति उक्तवती इन्दुमती।

अनन्तरम् इन्दुमती जयशीलसमीपं गत्वा उक्तवती– "एतावत्पर्यन्तं अस्माकं युवराज्ञ्याः विवाहविषये चिन्तनम् एव न प्रवृत्तम्। अतः भवतः स्नेहितः तां परिणेतुम् अर्हति। अस्माकं वैजयन्ती गुणवती सुन्दरी च। सा सर्वरीत्या अपि भवतः प्रियमित्रस्य अनुरूपा पत्नी भविष्यति" इति।

"भवतु, मह्यं साहाय्यं कृतवतोः भवतोः पिता-पुत्र्योः विषये अत्यन्तं कृतज्ञः अस्मि अहम्। किन्तु युवराजः जयशीलः अन्यां काञ्चित् परिणेतुं निश्चितवान् अस्ति इति इदानीं ज्ञातम्" इति मन्दहासपूर्वकम् उक्तवान् जयशीलः।

"का सा?" इति पृष्टवती इन्दुमती।

"इन्दुमती" इति उक्तवान् जयशीलः।

एतत् श्रुतवत्याः इन्दुमत्याः कपोलौ रागरञ्जितौ जातौ। सा लज्जया शिरः अवनमय्य स्थितवती।

तदा जयशीलः स्वपरिचयम् उक्त्वा– "यदि भवत्याः पिता अङ्गीकरोति, तर्हि अहं भवतीं परिणेष्यामि" इति उक्तवान्।

अनन्तरम् एकस्मिन् शुभे मुहूर्ते इन्दुमती-जयशीलयोः विवाहः सवैभवं सम्पन्नः।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! युवराज्ञीं परिणेतुं खलु आगतवान् आसीत् जयशीलः? सः किमर्थं तस्याः सखीम् इन्दुमतीं परिणीतवान्? 'जयशीलः युवराजः' इति अजानती इन्दुमती तस्मिन् अनुरागवती आसीत्। वस्तुस्थितेः ज्ञानानन्तरं तु परिणयेच्छा सहजा एव। युवराजं परिणेतुं का वा न इच्छेत्? किन्तु मम प्रश्नः – इन्दुमती किमर्थं पितुः सूचनां न पालितवती इति। युवराज्ञी राजकुमारद्वयेन सह आत्मीयतया व्यवहरति इति अंशः तया जयशीलं प्रति वक्तव्यः आसीत् खलु? किमर्थं न उक्तवती

सा? 'इन्दुमती एव परिणेतव्या' इति निश्चित्य अपि जयशीलः किमर्थं वा युवराज्ञ्याः अन्तरङ्गज्ञानार्थं प्रयत्नं कृतवान्? जयशीलस्य अङ्गरक्षकौ किम् विश्वासार्हौ न? किमर्थं तौ रहस्योद्घाटनं कृतवन्तौ? एवं बहवः सन्देहाः मम। एतेषाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि सद्यः एव भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान्– ''जयशीलः इन्दुमतीं यत् परिणीतवान् तत्र न कोऽपि दोषः। 'दयामयी गुणवती परिणेतव्या' इति खलु तस्य पितुः आदेशः आसीत्? इन्दुमती वस्तुतः गुणवती। अतः एव 'जयशीलः युवराजः' इति यदा ज्ञातवती तदा सा निश्चितवती यत् जयशीलः युवराज्ञीं वैजयन्तीं परिणेष्यति चेदेव वरम् इति। वैजयन्ती राजकुमारद्वयेन सह आत्मीयतया व्यवहरति चेदपि तयोः कतरस्मिन् अपि सा न अनुरक्ता इति अंशं प्रियसखी एषा जानाति स्म एव। यदि सा इच्छेत् तर्हि राजकुमार्याः व्यवहारं निवेद्य जयशीलं ततः विमुखं कृत्वा अनुरागप्रदर्शनेन स्वाभिमुखीकर्तुं शक्ता अभविष्यत्। किन्तु इन्दुमती गुणवती इत्यतः सा राजकुमारीं वञ्चयितुं न इष्टवती। जयशीलस्य सूचनानुसारम् एव अङ्गरक्षकौ रहस्योद्घाटनं कृतवन्तौ आस्ताम्। 'विषयं ज्ञात्वा धर्मशालायाः यजमानः पुत्रीं वदिष्यति एव। तदा इन्दुमत्याः प्रामाणिकतायाः परीक्षा भविष्यति' इति जयशीलस्य विचारः आसीत्। एतस्यां परीक्षायाम् इन्दुमती उत्तीर्णा अभवत्। 'कुलं न प्रधानं, गुणाः द्रष्टव्याः' इति पितुः आदेशः यः आसीत् तदनुगुणम् इन्दुमतीं परिणीतवान् जयशीलः। तदीयः एषः निर्णयः सर्वथा युक्तः एव'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# समयस्फूर्तिः

एकः ग्रामः। तत्र एकस्मिन् दिने रात्रौ सर्वेऽपि यदा निद्रामग्नाः आसन्, तदा अकस्मात् "चोराः, चोराः" इति ध्वनिः श्रुतः। निद्रामग्नाः सर्वेऽपि त्वरया उत्थाय दण्डादीनि आयुधानि गृहीत्वा ध्वनिम् अनुसृत्य धावितवन्तः। तत्र तैः दुर्गादासनामकः युवकः दृष्टः।

"चोराः कुत्र?" इति सर्वेऽपि तं दुर्गादासं पृष्टवन्तः।

सः युवकः समीपे विद्यमानं वटवृक्षं प्रदर्शितवान्। तदा ते सर्वे चोराः पलायनं यथा न कुर्युः तथा वटवृक्षं परितः स्थितवन्तः।

चन्द्रिकायाः प्रकाशे वृक्षे चोराः न दृष्टाः, किन्तु उपविष्टः एकः तरक्षुः दृष्टः।

तरक्षुं दृष्ट्वा तत्र स्थितेषु केचन उक्तवन्तः– "एतेषु दिनेषु अन्धकारे क्षेत्रमार्गेण आगत्य कश्चनः तरक्षुः काञ्चित् मारितवान्। अपरं च मारयितुं प्रयत्नं कृतवान्। सः तरक्षुः एषः एव। एषः अवश्यं मारणीयः" इति।

झटिति सर्वेऽपि पाषाणान् स्वीकृत्य तरक्षुं ताडितवन्तः। तरक्षुः वृक्षतः अधः प्लवनम् अकरोत्। तदा जनाः दण्डादिभिः आयुधैः ताडयन्तः तरक्षुं मारितवन्तः।

एतदनन्तरं जनाः युवकं दुर्गादासं पृष्टवन्तः– "किं भोः, नरमांसस्य रुचिं ज्ञात्वा तरक्षुः ग्रामम् आगच्छति चेत् 'चोराः चोराः' इति किमर्थम् आक्रोशनं कृतवान्?" इति।

तदा युवकः दुर्गादासः मन्दहासपूर्वकम् उक्तवान्– "चोराः इति यदा मया उक्तं, तदा भवन्तः सर्वे धैर्येण आयुधादीन् गृहीत्वा गृहात् आगताः। यदि अहं व्याघ्रः इति, तरक्षुः इति वा वदेयं, तर्हि भवन्तः बहिः आगच्छेयुः वा? सर्वेऽपि स्वगृहस्य द्वारं पिधाय अन्तः एव उपविशेयुः" इति।

दुर्गादासस्य समयस्फूर्तिं दृष्ट्वा सर्वेऽपि सन्तोषं प्रकटितवन्तः।



# चन्दमामानुबन्धः– ११
# ज्ञानभाण्डागारम्

## एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्–



## ईश्वरचन्द्रविद्यासागरः

कश्चन मेधावी रेलुयानात् अवतीर्णः। तस्य हस्ते केवलम् एकः लघुस्यूतः अस्ति। किन्तु सः तं लघुस्यूतम् अपि स्वयं नेतुं न इच्छति। सः समीपस्थं सामन्यवेषेण स्थितं कञ्चित् आहूय आदिष्टवान्– "अये! किं भवान् भारवाहः? एतं स्यूतम् उन्नयतु" इति। सः पुरुषः विना वचनं स्यूतम् उन्नीय तं मेधाविनम् अनुसृतवान्। उद्दिष्टस्य स्थलस्य प्राप्तेः अनन्तरं तेन मेधाविना ज्ञातं यत् स्वस्य स्यूतस्य वाहकः न अन्यः, अपि तु ईश्वरचन्द्रविद्यासागरः एव इति। तस्य मेलनार्थम् एव सः मेधावी आगतः आसीत्। एतया घटनया सः मेधावी नितरां लज्जितः अभवत्।

युगपरिवर्तकः ईश्वरचन्द्रविद्यासागरः १८२० तमे वर्षे सप्टेम्बर् २६ तमे दिनाङ्के बङ्गालराज्यस्य मिड्नापुरमण्डले जन्म प्राप्तवान्। सः कलकत्तानगरीयस्य सर्वकारीयसंस्कृतमहाविद्यालयस्य प्राचार्यः आसीत्। तेषु दिनेषु बाल्यविवाहः व्यवहारे आसीत्। बह्व्यः किशोर्यः आत्मनः परिणयम् अजानत्यः तारुण्यात् पूर्वम् एव विधवाः भवन्ति स्म। विद्यासागरः विधवाविवाहं शासनबद्धं कृतवान्। अनेकाः विद्यासंस्थाः स्थापितवान् सः। पाश्चात्यविज्ञानं, तत्त्वशास्त्रं च परिचायितवान् अपि। १८९१ तमे वर्षे तस्य मरणम् अभवत्।

## सः कः स्यात्?

सा च घनान्धकारमयी रात्रिः। अन्धकारे अपि सञ्चारं कर्तुं समर्थः कश्चन चोरः विशालम् एकं गृहं दृष्टवान्।

विशाले तस्मिन् गृहे कश्चन संन्यासी एकाकितया निवसति स्म। आश्चर्यं नाम सः महात्मा स्वस्य गृहस्य द्वाराणि कदापि न कीलयति स्म। एतं विषयं चोरः जानाति स्म।

चोरः गृहं प्रविष्टवान्। सः महात्मा प्रकोष्ठे सुप्तः आसीत्। तस्य शिरसः समीपे दीपः ज्वलति स्म। पार्श्वे च ताडपत्राणि आसन्।

तस्मिन् गृहे कानिचन पात्राणि केवलं दृश्यन्ते स्म। 'एतानि चोरितानि चेत् एकं दिनं यावत् जीवनं तु विना क्लेशं प्रचलति' इति चिन्तयति चोरः। सः तानि पात्राणि सङ्गृह्य द्वारसमीपं गतवान्। किन्तु सः तत्र किं पश्यति? धनुर्बाणहस्तः कश्चन द्वाररक्षणं कुर्वन् अस्ति! चोरः अपरस्मात् द्वारात् पलायनं कर्तुं प्रयत्नं कृतवान्। किन्तु तत्रापि धनुर्धारी अपरः दृश्यते!

चोरः कम्पमानः संन्यासिनः जागरणपर्यन्तं तत्रैव स्थितवान्। जागरितस्य संन्यासिनः पादयोः पतितवान् सः। तदा संन्यासी उक्तवान्– "मित्र! भाग्यशाली भवान्। यौ रक्षकौ भवता दृष्टौ तौ साक्षात् रामलक्ष्मणौ एव" इति।

वदन्तु पराणेषु प्रस्तुतः सः संन्यासी कः स्यात्?

(उत्तरम् ३६ तमे पृष्ठे)

## भारतम् – पूर्वम् इदानीं च

# देहली नगरस्य सप्त जन्मानि

इदानीं भारतस्य राजधानी देहली तस्मिन् स्थले अस्ति, यत्र, यस्य समीपे वा महाभारते प्रस्तुतं पाण्डवानां सुप्रसिद्धं नगरम् इन्द्रप्रस्थम् आसीत्। इदानीम् अपि देहलीनगरस्य कश्चन प्रदेशः 'इन्द्रपेट्'नाम्ना आहूयते।

महाभारतकालात् अनन्तरं सप्तमवारं देहलीनगरं निर्मितम् इति श्रूयते। सप्तवारं चक्रवर्ती शाहजहान् एतत् नगरं पुनर्निर्मितवान्।

स्वातन्त्र्यप्राप्त्यनन्तरं नवदेहली इति नाम्ना कथ्यमानेन भागेन युक्ता देहली महत् वैशाल्यं सम्पादितवती। आधुनिकं रूपम् एतत् अष्टमं स्वरूपं (जन्म वा) इति वदामः चेत् तत्र न अनौचित्यम्।

पूर्वतनानां सप्तानां स्वरूपाणाम् अवशेषाः स्मरणानि वा आधुनिके एकस्मिन् जनसम्मर्दयुते नगरे दृश्यन्ते एव।

एकादशे शतके 'अनङ्गपालः' नाम शक्तिशाली राजा देहल्याः सुन्दरं स्वरूपं कल्पितवान्। तस्य दुर्गस्य अवशेषाः लालुकोट्नाम्ना कुतुब् मिनार् समीपे इदानीम् अपि दृश्यन्ते।

देहल्याः अन्तिमः हिन्दूशासकः पृथ्वीराज् चौहान्। कनोज्राजकुमारी संयुक्ता स्वपितुः जयचन्द्रस्य इच्छां विरुध्य पृथ्वीराजं परिणीतवती।

एतेन कुपितः जयचन्द्रः टर्किश्-शासकेन महम्मद्घोरिनामकेन मिलित्वा देहलीम् आक्रान्तवान्। पृथ्वीराजः युद्धे मृतः अभवत्। (११९२ तमे वर्षे) संयुक्ता आत्महत्यया जीवनं समापितवती। अनन्तरवर्षे एव महम्मद्घोरी जयचन्द्रं वञ्चनया मारितवान्।

बहवः राजानः देहल्यां तिष्ठन्तः भारतं शासितवन्तः यथा, तथैव केचन देहलीं लुण्ठितवन्तः चापि। तादृशेषु लुण्ठाकेषु पर्शियाराजः नादिर् शाह प्रमुखः। सः अपरिमितम् ऐश्वर्यं मयूरसिंहासनं च देहलीतः नीतवान्। १७३८ तमे वर्षे ३०,००० जनान् मारितवान् चापि।

इदानीं देहली निर्मलं सुन्दरं च नगरम्। परितः स्थितैः कैश्चित् ग्रामैः समेता देहली इदानीं केन्द्रशासितप्रदेश अस्ति। इदानीम् अत्रत्या जनसङ्ख्या ६२ लक्षेभ्यः अधिका स्यात्।




१. अलिस् इन् वण्डर्ल्याण्ड्नामकस्य ग्रन्थस्य रचयितुः लाविस् कार्रल्वर्यस्य वास्तविकं नाम किम्?

२. तस्य वृत्तिः का आसीत्?

३. ग्रिम्सहोदरयोः पूर्णं नाम किम्?

४. चैनादेशस्य शासकीयभाषा का?

५. तस्य शब्दस्य वास्तविकं मूलं किम्?

६. प्रपञ्चे सामान्यतः कति भाषाः स्युः?

७. सः प्रसिद्धः आंग्लकविः कः, यश्च १९ शतके लेखनकार्यम् आरभ्य विंशतितमस्य शतकस्य मध्यभागं यावत् अनुवर्तितवान्?

८. कः प्रधानमन्त्री साहित्यक्षेत्रे नोबेल्पारितोषिकं प्राप्तवान्?

९. कः आंग्लकाव्यानां पितामहः इति भाव्यते?

१०. तदीयस्य पुस्तकस्य नाम किम्?

## उत्तराणि

**सः कः स्यात्?**

तुलसीदासः।

**साहित्यम्**

१. चार्ल्स् लुट्विज् डागसन्।

२. सः गणितप्राध्यापकः आसीत्।

३. जाकोब् ग्रिम्म्, विल्हेम् ग्रिम्म् चेति।

४. मन्दरिन्।

५. भारतीयः 'मन्त्री' इति शब्दः।

६. सार्धैकसहस्रं भाषाः।

७. जार्ज् बर्नार्ड् शाह्।

८. विन्सन् चर्चिल्।

९. गियोफ्रे च्यूसर्।

१०. दि सेण्टेर्बरी टेल्स्।



# नेहरूकथा–७

जवहरलालः कारागारतः विमोचनं प्राप्तवान्। तत्समये सः सन्निपातज्वरेण पीडितः अभवत्। एतत्कारणतः सः शय्याम् आश्रितवान्। कानिचन दिनानि सः सर्वकार्यक्रमान् अपि परित्यज्य शान्ततया समयं यापितवान्।

१९२३ तमे वर्षे काकिनाडनगरे प्रवृत्तायां कांग्रेसुमहासभायां मुस्लिं राष्ट्रियनायकः एं. मोहम्मद् अली अध्यक्षपदम् अलङ्कृतवान्। तस्य अनुरोधकारणतः जवहरलालः कांग्रेसुसंस्थायाः कार्यदर्शी अभवत्।





एतदनन्तरं तेन अन्योऽपि नूतनः अनुभवः प्राप्तः। अलहाबादसमीपे गङ्गा-यमुना-सरस्वतीनद्यः परस्परं मिलन्ति। अस्मिन् त्रिवेणीसङ्गमे तदा तदा कुम्भमेलोत्सवः प्रचलति। एषः उत्सवः महता वैभवेन परम्परया प्रचलति।



'अस्मिन् त्रिवेणीसङ्गमे स्नानं क्षेमकरं न' इति आलोच्य तत्कानीलसर्वकारः त्रिवेणीसङ्गमे स्नानस्य निषेधम् अकरोत्। आरक्षकाः बलवतीं रक्षणव्यवस्थां कृतवन्तः। कोऽपि जले अवतरणं यथा न कुर्यात् तथा उन्नता वृतिः तैः निर्मिता।

सुप्रसिद्धः नायकः पण्डितः मदनमोहनमालवीयः शासनव्यवहारस्य विरोधं कृतवान्। वृतेः पार्श्वे सिकतानाम् उपरि स्वानुयायिभिः सह शान्तरीत्या सत्याग्रहम् आरब्धवान्। कुम्भमेलं द्रष्टुं गतः जवहरः तस्मिन् सत्याग्रहे भागं गृहीतवान्।





काश्चन घण्टाः अतीताः। सूर्यः मध्याकाशम् आगतवान्। तप्ताः सिकताः तीव्रं तापं जनयन्ति स्म। मध्याह्नानन्तरं जवहरः असहनया उत्थाय वृतेः उपरि उपविश्य कांग्रेसध्वजं गृहीतवान्।

एतत् दृश्यं दृष्ट्वा शतशः जनाः उत्साहं प्राप्य वृतेः उपरि उपविष्टवन्तः। एतेन वृतिः भग्ना। जनाः नदीं प्रविष्टवन्तः। नेहरू अपि जलम् अवतीर्णः। अन्ते मालवीन्ः अपि जलम् अवतीर्णः।





अहमदाबादनगरे प्रवृत्तायां कांग्रेस्सभायां गान्धीजी प्रतिपादितवान् यत् ये तन्तुनिर्माणं कर्तुं शक्नुवन्ति ते केवलं कांग्रेस्सदस्याः भवितुम् अर्हन्ति इति। मोतीलाल् नेहरू, देशबन्धुः चित्तरञ्जनदास् च एतं विचारं विरुध्य सभात्यागं कृतवन्तः। एतेन गान्धीजिना स्वप्रतिपादनम् उपसंहरणीयम् आपतितम्।

१९२४ तमे वत्सरे प्रवृत्तायाः कांग्रेस् महासभायाः अध्यक्षः आसीत् गान्धीजी। तस्य अपेक्षानुगुणं जवहरलालः पुनः अपि कार्यदर्शी अभवत्। जवहरलाले सर्वे कांग्रेस्सदस्याः विशेषविश्वासं प्रकटयन्ति इति ज्ञातवान् गान्धीजी।





१९२५ तमे वत्सरे मोतीलालस्य आरोग्यं विषमतां गतम्। सः सकुटुम्बं हिमालयप्रदेशं गतवान्। जवहरलाल् अपि तैः सह गतः। यदा सः चाम्बाप्रदेशे आसीत् तदा चित्तरञ्जनदासः कीर्तिशेषः जातः इति वार्ता प्राप्ता। पिता पुत्रः च कलकत्तानगरं प्रति प्रस्थितवन्तौ।

१९२४ तमे वत्सरे अलहाबादनगरे मतीयकलहाः प्रवृद्धाः। एतत् दृष्ट्वा जवहरलालः चिन्ताक्रान्तः अभवत्। स्वस्य प्रार्थनास्थलस्य समीपे हिन्दवः शोभायात्रया यत् गच्छन्ति तेन महम्मदीयाः कुपिताः। हिन्दूधर्मे तु शोभायात्रायाः महत्त्वपूर्णं स्थानम् आसीत्।





मोहम्मदीयानां व्यवहारस्य विरोधं प्रकटयन्तः हिन्दवः अतिप्राचीनकालात् प्रवर्तमानां रामलीलाशोभायात्रां स्थगितवन्तः। तादृश्यां शोभायात्रायां बाल्ये भागं गृहीतवान् आसीत् जवहरः। तं सन्दर्भम् इदानीं स्मरति सः। परस्परावगतेः अभावात् एवं प्रवर्तते इति जानन् जवहरः एतस्य परिहारोपायं सगम्भीरं चिन्तयति।

—(अनुवर्तते)

अनन्तरदिने शरभः सोमसुन्दरस्य गृहम् आगत्य– "आवयोः मध्ये इतः पूर्वं यत् प्रवृत्तं तत् सर्वं विस्मृत्य मैत्रीं स्थापयितुम् आगतवान् अस्मि अहम्। मां क्षाम्यतु भवान्। इतः परम् आवां स्नेहेन व्यवहराव। सद्यः एव मम पुत्रस्य विवाहः भविष्यति। तत्सन्दर्भे भवद्भिः सर्वैः आगत्य सहकारः दातव्यः" इति प्रार्थयित्वा गतवान्।

एतया घटनया आश्चर्यचकितः सोमसुन्दरः स्वगृहम् आगतं सारङ्गं पृष्टवान्– "अल्पे एव काले शरभस्य मनसि परिवर्तनं कथम् आनीतवान् भवान्?" इति।

तदा सारङ्गः उक्तवान्– "अहं ह्यः शरभस्य गृहं गत्वा 'नगरात् सोमसुन्दरः मया सह आगच्छन् प्रतिवेशिभिः सह विरोधः सदापि क्लेशाय एव भवति इति खेदेन वदति स्म' इति काल्पनिकीं घटनां निवेद्य तम् उक्तवान्– 'भवतः सोमसुन्दरस्य च मध्ये मधुरः सम्बन्धः नास्ति इति मया श्रुतम्। प्रतिवेशिनां मध्ये मतिभेदः कदापि न भवेत्। सोमसुन्दरः भवतः स्नेहम् इच्छति। कमपि पूजाकार्यक्रमं निश्चित्य तद्व्याजेन भवन्तम् आहूय तद्द्वारा मधुरसम्बन्धः वर्धनीयः इति सः चिन्तयन् अस्ति। यः प्रथमं मैत्रीप्रस्तावं करोति सः एव श्रेष्ठः इति भवान् जानाति एव। भवतः पुत्रस्य विवाहः निश्चितः इति श्रुतं मया। अतः भवान् स्वयं गत्वा सोमसुन्दरम् आमन्त्रयतु। तदा भवतः एव गौरवं वर्धते' इति। मम वचनात् प्रेरितः सः भवन्तम् आमन्त्रितवान्" इति।

"श्लाघ्यः प्रयत्नः भवतः। किन्तु मैत्रीप्रस्तावः तेनैव प्रथमं कृतः इत्यतः तस्यैव श्रेष्ठत्वं सिद्धम्" इति उक्तवान् सोमसुन्दरः।

"तत् कथम्? मैत्री सम्पादनीया इति विचारः प्रथमं भवतः मनसि एव खलु आगतः।वस्तुतः श्रेष्ठत्वं तु भवतः एव" इति उक्तवान् सारङ्गः।

"कार्ये मुखस्तुतौ च समानं पाण्डित्यं भवतः" इति वदन् सोमसुन्दरः, धनं दत्त्वा तं प्रेषितवान्।



अनन्तरदिने शरभः सोमसुन्दरस्य गृहम् आगत्य– "आवयोः मध्ये इतः पूर्वं यत् प्रवृत्तं तत् सर्वं विस्मृत्य मैत्रीं स्थापयितुम् आगतवान् अस्मि अहम्। मां क्षाम्यतु भवान्। इतः परम् आवां स्नेहेन व्यवहराव। सद्यः एव मम पुत्रस्य विवाहः भविष्यति। तत्सन्दर्भे भवद्भिः सर्वैः आगत्य सहकारः दातव्यः" इति प्रार्थयित्वा गतवान्।

एतया घटनया आश्चर्यचकितः सोमसुन्दरः स्वगृहम् आगतं सारङ्गं पृष्टवान्– "अल्पे एव काले शरभस्य मनसि परिवर्तनं कथम् आनीतवान् भवान्?" इति।

तदा सारङ्गः उक्तवान्– "अहं ह्यः शरभस्य गृहं गत्वा 'नगरात् सोमसुन्दरः मया सह आगच्छन् प्रतिवेशिभिः सह विरोधः सदापि क्लेशाय एव भवति इति खेदेन वदति स्म' इति काल्पनिकीं घटनां निवेद्य तम् उक्तवान्– 'भवतः सोमसुन्दरस्य च मध्ये मधुरः सम्बन्धः नास्ति इति मया श्रुतम्। प्रतिवेशिनां मध्ये मतिभेदः कदापि न भवेत्। सोमसुन्दरः भवतः स्नेहम् इच्छति। कमपि पूजाकार्यक्रमं निश्चित्य तद्व्याजेन भवन्तम् आहूय तद्द्वारा मधुरसम्बन्धः वर्धनीयः इति सः चिन्तयन् अस्ति। यः प्रथमं मैत्रीप्रस्तावं करोति सः एव श्रेष्ठः इति भवान् जानाति एव। भवतः पुत्रस्य विवाहः निश्चितः इति श्रुतं मया। अतः भवान् स्वयं गत्वा सोमसुन्दरम् आमन्त्रयतु। तदा भवतः एव गौरवं वर्धते' इति। मम वचनात् प्रेरितः सः भवन्तम् आमन्त्रितवान्" इति।

"श्लाघ्यः प्रयत्नः भवतः। किन्तु मैत्रीप्रस्तावः तेनैव प्रथमं कृतः इत्यतः तस्यैव श्रेष्ठत्वं सिद्धम्" इति उक्तवान् सोमसुन्दरः।

"तत् कथम्? मैत्री सम्पादनीया इति विचारः प्रथमं भवतः मनसि एव खलु आगतः।वस्तुतः श्रेष्ठत्वं तु भवतः एव" इति उक्तवान् सारङ्गः।

"कार्ये मुखस्तुतौ च समानं पाण्डित्यं भवतः" इति वदन् सोमसुन्दरः, धनं दत्त्वा तं प्रेषितवान्।





# कृष्णावतारः

द्वारकायाः आक्रमणार्थं सन्नाहं कुर्वन् आसीत् पौण्ड्रः वासुदेवः। तस्मिन् समये नारदमहर्षिः तत्र आगतवान्। एतां वार्तां ज्ञात्वा पौण्ड्रः वासुदेवः स्वयं गत्वा नारदं सादरं स्वागतीकृत्य अर्घ्यपाद्यादिभिः तं सत्कृतवान्। अनन्तरं सुवर्णमये आसने तम् उपवेश्य उक्तवान्– "महानुभाव! भवता अदृष्टः लोकः कोऽपि नास्ति। भवन्तम् अहं स्मरन् आसम्। त्रिकालज्ञानी भवान् मम इङ्गितं जानन् इव उपस्थितः अस्ति। भवता किञ्चित् साहाय्यं करणीयम्। अहं कृष्णं तत्परिवारजनान् च संहर्तुं सङ्कल्पं कृतवान् अस्मि। एतं विचारं त्रिषु लोकेषु प्रसारयतु। सः गोपकुलोत्पन्नः मम नाम्ना आत्मानं परिचाययन् नाम्नः अगौरवं सम्पादयन् अस्ति। तस्य आयुः समाप्तम् इति सर्वे जानन्तु नाम" इति।

एतत् श्रुत्वा मन्दहासपूर्वकम् उक्तवान् नारदः– "भवता यथा उक्तं तथा अहं लोकसञ्चारी इति तु सत्यम् एव। लोके जनाः मम वचनेषु विश्वसन्ति इत्यपि सत्यम् एव। किन्तु भवतः चिन्तनं सर्वथा अयुक्तम् अस्ति। कृष्णस्य भवतः च किं सादृश्यम्? अल्प कीटः पर्वतं किं चालयेत्? कृष्णं विरुध्य भवान् व्यवहरति चेत् हानिः भवतः एव भवेत्। कृष्णः वासुदेवः, भवान् अपि वासुदेवः। कृष्णः इव भवान् अपि शङ्खचक्रगदाधारी। एतावता किं कृष्णसदृशः भवेत् भवान्? कदापि न। नामसादृश्यात्, आयुधधारणेन वा सामर्थ्यं न सिध्यति। अहं तु यथार्थवादी।

२३. पौण्ड्रवासुदेवस्य वधः।



भवतः मदम् अपनेतु कृष्णः सिद्धः एव अस्ति' इति।

तदा पौण्ड्रः अट्टहासं प्रकटयन् उक्तवान्– "नारद! यदि अहं भवतः वचनं विरुध्य किमपि वदेयं तर्हि भवान् शापं दद्यात्। शापभीत्या एव जनाः भवतः वचनं पालयन्ति। भवता यत् उक्तं तत् अन्येन केनचित् उक्तं चेत् सः यमसदनं गतः अभविष्यत्। आस्तां तावत्, भवता सह व्यर्थं चर्चां कर्तुं मम समयावकाशः नास्ति। अचिरात् एव भवान् मम कार्यं यथा प्रशंसेत् तथा करोमि, पश्यतु। इदानीम् इतः निर्गन्तुम् अर्हति भवान्। अधिककथनेन मम कोपाग्निं मा उद्दीपयतु" इति।

नारदः प्रतिवचनं किमपि अदत्त्वा ततः बदरिकाश्रमं गतवान्। तत्रत्यं कृष्णं प्रवृत्तं सर्वं निवेद्य, पौण्ड्रस्य युद्धसन्नाहं चापि निवेद्य मम कर्तव्यं समाप्तम् इति आलोच्य पुनरपि लोकसञ्चारार्थं ततः निर्गतवान्।

तद्दिने एव रात्रिसमये पौण्ड्रः महत्या सेनया सह द्वारकां प्रति प्रस्थितवान्। सहस्रशः दीपशिखाभिः युक्ता तस्य सेना द्वारकायाः पूर्वद्वारं प्राप्नोत्। मध्यरात्रसमये रणदुन्दुभयः काहलाः च ध्वनिताः अभवन्। तदानीम् उत्पन्नः ध्वनिः धैर्यवतः अपि धैर्यच्युतिं कर्तुं समर्थः आसीत्।

यादवाः अपि जागरूकतया एव आसन्। दीपशिखापङ्क्तिभिः प्रकाशमाना द्वारका दिने यथा तथैव रात्रौ अपि दृश्यते स्म। पौण्ड्रस्य आक्रमणेन यादवाः किञ्चिदपि न भीताः। तेषां सैन्यं तु सुसज्जितम् आसीत् एव। शत्रूणां रणदुन्दुभिध्वनिं श्रुत्वा उग्रसेनः, बलरामः, कृतवर्मा, सात्यकिः इत्यादयः सैन्यं प्रेरयन्तः शत्रून् सम्मुखीकृतवन्तः। घोरं युद्धं प्रारब्धम्। पक्षद्वयस्य अपि गजाः, अश्वाः, रथाः च बहुधा नष्टाः। वीरावेशः, आर्तनादः च सर्वत्र श्रूयते स्म।

पौण्ड्रपक्षीयः एकलव्यः नाम कश्चन वीरः स्वनाम उच्चैः उद्घोष्य सात्यकिं, कृतवर्माणं, बलरामं, कृष्णं च नाम्ना आहूय युद्धार्थं तान् प्रेरितवान्। एतत् श्रुत्वा केचन यादववीराः अग्रे आगत्य आक्रमणं कृतवन्तः। किन्तु

एकलव्यः तान् बाणप्रयोगेण निवारितवान्। दीपशिखाधारिणः अपि ततः पलायितवन्तः। युद्धरङ्गम् अन्धकारेण आवृतम् अभवत्। यादवसैन्ये दिग्भ्रान्तिः प्रसृता।

पौण्ड्रः एतेन उत्साहं प्राप्य– "भोः सैनिकाः, दुर्गभित्तिम् आरोहन्तु। ध्वजान् पातयन्तु। नगरम् आक्रम्य तिष्ठन्तु" इति उच्चैः पुनः पुनः उक्तवान्। एतेन पौण्ड्रस्य सैन्ये उत्साहः तरङ्गरूपेण प्रसृतः।

एतां परिस्थितिं दृष्ट्वा सात्यकेः रोषः नितरां प्रवृद्धः। 'कृष्णः नगररक्षणभारं मम उपरि निक्षिप्य गतवान्। कृष्णस्य अनुपस्थितिं जानन् शत्रुः मदेन उन्मत्तः जातः अस्ति। शत्रुपक्षस्य मदः न अपनीतः चेत् मम जीवनेन किम्?' इति आलोच्य सात्यकिः स्वसेनाम् उद्दिश्य उक्तवान्– "मित्राणि! नगररक्षणभारः अस्मासु अस्ति इति एतम् अंशं विस्मृतवन्तः वा? कृष्णः अस्मद्विषये किं चिन्तयेत्? इदानीं मम बाहुबलं किञ्चित् पश्यन्तु। अन्धकारम् अहं कथं निवारयामि इत्यपि पश्यन्तु" इति। अनन्तरं सः धनुषः ज्याम् आकृष्य टङ्कारं कृतवान्।

सात्यकेः धनुषः निर्गतम् आग्नेयास्त्रम् अग्निज्वालाम् उद्वमत् सर्वाः दिशः प्रकाशमानाः अकरोत्। प्रकाशं दृष्ट्वा दुर्गभित्तेः आरोहणे उद्युक्ताः पौण्ड्रसैनिकाः भीत्या ततः धावितवन्तः। सात्यकिसैनिकाः तान् अनुधावितवन्तः। सात्यकिः उच्चस्वरेण उद्घोषितवान्– "राजकुले जातः अपि राजधर्मम् अजानन् रात्रिसमये आक्रमणार्थम्





क्षणमात्रेण मम बाणः भवन्तं यमसदनं प्रेषयिष्यति। कृष्णः द्वारकायाः रक्षणभारं भवति निक्षिप्य कैलासं प्रति गतवान् इति मया श्रुतम्। किं तत् सत्यम्? सः कदा प्रत्यागमिष्यति? प्रत्यागमनानन्तरं सः मम सामर्थ्यं स्वयं द्रक्ष्यति। इदानीं भवन्तं संहरिष्यामि, येन कृष्णः मम प्रतापस्य परिचयं किञ्चित् प्राप्नुयात्। मरणं तु भवतः ललाटे लिखितम्। इष्टदेवं स्मरन् अन्तिमक्षणान् गणयन् अग्रे आगच्छतु" इति उक्तवान्।

सात्यकि-पौण्ड्रयोः मध्ये घोरं युद्धं प्रवृत्तम्। एकः अपरं तीक्ष्णैः बाणैः पीडयति। परस्परं मूर्च्छां गमितवन्तौ तौ। परस्परं रथध्वंसम् अपि तौ कृतवन्तौ। अनन्तरं तयोः गदायुद्धम् अपि प्रवृत्तम्। अन्ते बाहुयुद्धम् अपि आरब्धम्। सर्वविधेषु अपि युद्धेषु तयोः समबलं दृश्यते। एतयोः युद्धे जयस्य अपजयस्य वा निर्णयः कदापि भवितुं न अर्हति इति द्रष्टारः निश्चितवन्तः।

इतः परम् अपि युद्धस्य अनुवर्तनेन प्रयोजनं नास्ति इति विचिन्त्य उभयपक्षीयाः अपि तयोः समीपं गत्वा तौ ततः दूरं नीतवन्तः।

अपरत्र एकलव्य-बलरामयोः बाहुयुद्धं प्रवर्तते। एतस्मिन् युद्धे बलरामः एकलव्यं मूर्च्छितं कृतवान्। अनन्तरं स्वकीयेन हलायुधेन शत्रुसेनाम् आकुलीकृतवान्। एतावता सचेतनः एकलव्यः पुनः अपि युद्धार्थम् आगतवान्। तयोः युद्धे प्रवर्तमाने,

उद्युक्तः सः धूर्तः कुत्र? तेन सह भविष्यति मम युद्धम्। सः कुत्र?" इति।

एतत् श्रुत्वा महता उत्साहेन अग्रे आगतः पौण्ड्रः– "अये सात्यके! भवान् आगतवान् वा युद्धार्थम्? अस्तु तावत्। सः कपटः कृष्णः कुत्र? गोपालनचतुरः सः आत्मानं युद्धचतुरम् अपि भावयति। मम सामर्थ्यादिकं न श्रुतं तेन। काश्चन स्त्रियः, पशुतुल्याः केचन च मारिताः चेत् किं पौरुषं सिद्धं भवति? वीरेण सह युद्धं कृत्वा पौरुषं प्रमाणीकरणीयम्। मम मित्रं नरकं मारितवान् अस्ति सोऽयं कृष्णः। तस्य संहारार्थम् एव आगतवान् अस्मि अहम्। दुष्टः कश्चित् अनीतिमार्गेण मारितः चेत् कः दोषः तत्र? भवादृशेन अल्पेन सह मम युद्धं न शोभते। अतः अपसरतु। अन्यथा

प्रातःकालः जातः।

तदा पौण्ड्रः 'युद्धं स्थगयन्तु' इति स्वपक्षम् आदिश्य– "बहूनां यादवानां नाशनेन अपि प्रयोजनं किमपि नास्ति। यतः प्रमुखः शत्रुः नगरे नास्ति। अतः एतत् युद्धं निरर्थकम्। कृष्णस्य प्रत्यागमनानन्तरं वयं पुनः आक्रमणं कृत्वा अस्माकं पराक्रमं प्रदर्शयाम। क्षुद्रैः एतैः सह युद्धेन वृथा शक्तिहानिः, तावदेव" इति उक्तवान्।

एतदनन्तरं पौण्ड्रस्य सेना युद्धं स्थगयित्वा प्रतिगमनार्थम् उद्युक्ता। पौण्ड्रः सेनया सह स्वमित्रस्य काशीराजस्य समीपं गतवान्। कृष्णस्य प्रत्यागमनं प्रतीक्षमाणः तत्रैव स्थितवान्।

द्वारकायां यादवाः विजयसूचकं तूर्यध्वनिं प्रसार्य नगरं प्रविष्टवन्तः। 'कृष्णस्य अनुपस्थितौ नगररक्षणं कर्तुं शक्तम्' इति सन्तुष्टाः आसन् ते।

एतदनन्तरं कदाचित् ते गरुडम् आरुह्य नीलगगनमार्गेण आगच्छतः कृष्णस्य दिव्याकृतिं दृष्टवन्तः। नगरद्वारसमीपे गरुडवाहनात् अवतीर्णः कृष्णः दारुकेण आनीतं रथम् आरुह्य द्वारकां प्रविष्टवान्।

द्वादशवर्षाणाम् अनन्तरं कृष्णं दृष्टवतां द्वारकावासिनां सन्तोषस्य सीमा एव नास्ति। कृष्णः उग्रसेनप्रभृतीन् कैलासयात्राविषये विस्तरेण उक्तवान्। पौण्ड्रस्य आगमन-विषये, तत्समये प्रवृत्तस्य युद्धस्य विषये च विस्तरेण श्रुतवान् अपि।

द्वारकां प्रति कृष्णस्य आगमनं ज्ञात्वा





काश्यां स्थितः पौण्ड्रः दूतद्वारा कृष्णं प्रति एकं सन्देशं प्रेषितवान्– ''अये कृष्ण! भवान् गोपकुले जातः इत्यतः राजधर्मं किञ्चिदपि न जानाति। स्त्रियः, मृगान्, मम बन्धून् च नाशितवान् भवान्। मम नाम्ना एव आत्मानं परिचाययन् भवान् मम चिह्नानि अपि धृत्वा निर्लज्जं व्यवहरति। धिक् भवन्तम्। यदि भवान् जीवितुम् इच्छति तर्हि मम आज्ञानुसारं चक्रादिकम् आयुधं परित्यज्यतु। क्षमां प्रार्थयन् मां शरणं गच्छतु च'' इति।

दूतस्य मुखात् पौण्ड्रस्य सन्देशं श्रुत्वा कृष्णः हसन्– ''भोः, भवतः राज्ञा यथा उक्तं तथैव करिष्यामि। मां सः स्वसमीपम् आहूतवान्। अतः तत्र आगमिष्यामि। ज्येष्ठानां वचनम् अक्षरशः पालनीयम्। अतः तस्य पुरतः एव चक्रं मम हस्तात् मुञ्चामि। तत् चक्रं तस्य प्राणान् एव यदि पिबेत् तर्हि अहं किमपि कर्तुं न शक्नुयाम्। परां गतिं प्राप्तुं ज्येष्ठस्य तस्य एव प्रथमः अवकाशः भविष्यति'' इति उक्त्वा दूतं विशेषतः संत्कृत्य पौण्ड्रसमीपं प्रतिप्रेषितवान्।

दूतः पौण्ड्रसमीपं गत्वा कृष्णस्य सन्देशं श्रावितवान्। पौण्ड्रः स्वसमानैः इतरैः राजभिः सह मिलितः सन् कृष्णस्य आगमनं प्रतीक्षमाणः स्थितवान्।

कृष्णः पौण्ड्रसमीपं प्रस्थितवान्। सात्यकिप्रभृतयः यादववीराः ससैन्यं कृष्णम् अनुसृतवन्तः।

कृष्णः तान् निवारयन् उक्तवान्– ''इतः पूर्वं प्रवृत्ते युद्धे विजयं प्राप्य भवन्तः स्वकर्तव्यं पूरितवन्तः। इदानीं मम कर्तव्यं केवलम् अवशिष्टम्। तत् अहम् एव करोमि'' इति।

कृष्णः गरुडम् आरुह्य पौण्ड्रसमीपं गतवान्। उभौ अपि वासुदेवौ परस्परम् अभिमुखं स्थितवन्तौ।

कृष्णः पौण्ड्रम् उक्तवान्– ''पौण्ड्रराज! मदीयानि चिह्नानि धर्तव्यानि इति भवतः इच्छा यदि स्यात् तर्हि अहम् अनुमतिं दद्यां खलु? किमर्थं मां विरुध्य व्यवहरति? मां क्षमां प्रार्थयति चेत् अहं भवन्तं सजीवं त्यजामि। तदर्थम् इतोऽपि समयः अस्ति। अतः पुनः अपि चिन्तयतु। अहं शरणागतरक्षकः। अतः मां शरणं गच्छतु।

मम चक्रेण बहवः मारिताः। अत्रस्थः कोऽपि मम चक्राघातात् भवन्तं रक्षितुं न अर्हति। भवतः हितार्थम् एव एतत् वदन् अस्मि। अविवेकेन मा व्यवहरतु" इति।

"भवतः चिह्नानि मया न धृतानि। मम चिह्नानि एव धृतानि भवता। मां हितं बोधयतः भवतः कियत् धार्ष्ट्यम्? भवतः दण्डनार्थम् अहं द्वारकाम् आगतः। मम आगमनं पूर्वम् एव कथञ्चित् जानन् भवान् कैलासे कुत्रापि निलीय स्थितवान्। वृथा नगरस्य नाशः किमर्थम् इति आलोच्य अहं प्रत्यागतः। इदानीं भवतः आगमनं युक्तम् एव जातम्। भवतः स्वागतार्थं यमः सिद्धः अस्ति" इति उक्तवान् पौण्ड्रः।

अनन्तरं तयोः मध्ये घोरं युद्धं प्रवृत्तम्। कृष्णः पौण्ड्रस्य आयुधानि एकैकशः नाशयन् अन्ते चक्रायुधप्रयोगेण पौण्ड्रस्य संहारं कृतवान्।

आप्तस्य मित्रस्य मरणात् क्रुद्धः काशिराजः कृष्णस्य उपरि आक्रमणं कृतवान्। कृष्ण एकेन एव अस्त्रप्रयोगेण तस्य शिरः कर्तितवान्। तच्च शिरः काशीनगरस्य मध्ये अपतत्।

एवं कृष्णः आगमनस्य उद्देश्यं सफलीकृत्य द्वारकां प्रत्यागतवान्।

स्वस्य पितुः मरणात् सन्तप्तः काशीराजस्य पुत्रः पुरोहितद्वारा विशिष्टं यागं कारितवान्। यागस्य अन्ते यज्ञकुण्डतः कृत्या नाम भयङ्करपिशाची आविर्भूय– "किं करणीयं मया। आदिशतु" इति अवदत्। "कृष्णं तत्परिवारजनान् च मारयित्वा आगच्छतु" इति तां कृत्यापिशाचीम् उक्तवान् काशीराजपुत्रः।

कृत्या द्वारकां गतवती। तस्याः घोरं रूपं दृष्ट्वा भीताः जनाः कृष्णं तस्याः आगमनं निवेदितवन्तः।

कृष्णः तस्याः उपरि सुदर्शनचक्रं प्रयुक्तवान्। एतत् दृष्ट्वा कृत्या काशीं प्रति धावितवती। अतः पिशाच्या सह काशीनगरस्य अपि नाशः अभवत्।





# लोभी धनिकः

कस्मिंश्चित् ग्रामे पूर्वं कश्चन धनिकः गृहस्थः आसीत्। तस्य सम्पादनम् अधिकम् आसीत्, पित्रार्जिता सम्पत्तिः अपि आसीत्। अतः सः यथाशक्ति दानं करोति स्म। 'श्रेष्ठः दाता' इति कीर्तिः अपि प्राप्ता आसीत् तेन।

पार्श्वग्रामे अन्यः धनिकः आसीत्। सः परमलोभी। दानं पापाय इति तस्य विश्वासः। अतः जनाः तं प्रतिदिनं निन्दन्ति स्म। 'लोभी धनिकः' इत्येव जनाः तम् आह्वयन्ति स्म।

एषा अपख्यातिः कथञ्चित् निवारणीया एव इति आलोचितवान् सः लोभी धनिकः। सः स्वस्य विश्वासपात्रं सेवकम् आहूय स्वस्य खेदं निवेद्य– "अपख्यातेः निवारणार्थं कमपि उपायं सूचयति वा भवान्?" इति पृष्टवान्।

तदा सः सेवकः उक्तवान्– "लोभी इति अपख्यातेः निवारणार्थं दाता इति ख्यातिः सम्पादनीया भवति। अतः पार्श्वग्रामे स्थितं धनिकं स्वगृहं प्रति आह्वयतु। सः यदा भवद्गृहे भवति तदा अहं विविधैः वेषैः बहुबारम् आगत्य याचनां करोमि। यदा यदा अहम् आगच्छामि तदा भवान् शतं रजतनाणकानि मह्यं ददातु। भवतः एतां दानशीलतां दृष्ट्वा आश्चर्यचकितः सः भवदीयं दातृत्वं सर्वत्र प्रसारयिष्यति एव। विना व्ययं भवान् अपारां कीर्तिं प्राप्तुं शक्नोति" इति।

एषः उपायः धनिकाय अरोचत। सः सेवकम् उक्तवान्– "भवता उत्तमः उपायः सूचितः। श्वः एव तं भोजनार्थम् आह्वयाम। अद्य सायं भवान् तस्य ग्रामं गत्वा तम् आहूय प्रातः एव उपस्थातव्यम् इति सूचयतु" इति।

सेवकः तद्दिने एव दातुः धनिकस्य गृहं गत्वा उक्तवान्– "श्रीमन्! श्वः

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



प्रचलति इत्यतः तस्य दानशीलतां जनाः न जानन्ति। अस्माकं यजमानः स्वस्य दानस्य विषये कदापि कमपि न वदति। एतावता तेन लक्षं रजतनाणकानि दानरूपेण दत्तानि। एतन्निमित्तं श्वः मन्दिरे लक्षपुष्पार्चनं भविष्यति। एतस्मिन् शुभदिने स्वसमानः अन्यः दाता भोजनीयः इति तस्य विचारः। अतः सः भवन्तं साग्रहम् आह्वयन् अस्ति" इति उक्तवान् सः सेवकः।

"अस्तु तर्हि। श्वः प्रातः आगमिष्यामि। गत्वा एतं विषयं यजमानं वदतु" इति उक्त्वा तं सेवकं प्रेषितवान् दाता धनिकः।

सेवकः स्वस्य गृहं गत्वा दातृधनिकगृहे यत् सम्भाषणं प्रवृत्तं तत् समग्रं निवेदितवान्। अनन्तरदिने प्रातः दाता धनिकः लोभिनः धनिकस्य गृहम् आगतवान्।

एकाकितया आगतं दातारं धनिकम् उक्तवान् लोभी धनिकः– "भवता सह भवदीयः सेवकः न आगतः वा? सोऽपि आनेतव्यः आसीत्" इति।

"कार्यविशेषस्य कारणतः सः इतोऽपि न प्रस्थितः। भवतः क्लेशः न भवेत् इति उद्देशेन अहं शीघ्रम् एव आगतः। कार्यं समाप्य सः किञ्चित्कालानन्तरम् आगच्छेत्" इति उक्तवान् दाता धनिकः।

"मया एतावता लक्षं रजतनाणकानि दानरूपेण दत्तानि इति विषयम् अस्मत्सेवकः भवन्तम् उक्तवान् इति श्रुतम्। मया कृतस्य

विशेषातिथिरूपेण भोजनार्थम् आगन्तव्यम् इति अस्माकं यजमानः आमन्त्रणं प्रेषितवान् अस्ति। भवता अवश्यम् उपस्थातव्यम्" इति।

तदा दाता धनिकः हसन् उक्तवान्– "भोः, भवतः यजमानः मार्जाराय अपि न किञ्चित् ददाति इति मया श्रुतम् आसीत्। तादृशः सः मां भोजनार्थम् अनुरोधपूर्वकम् आह्वयति इति आश्चर्यकरम् एव" इति।

"श्रीमन्! अस्माकं यजमानस्य विषये या मिथ्या किंवदन्ती श्रूयते तत्र भवान् विश्वसितवान् इति भावयामि अहम्। किन्तु वस्तुस्थितिः तु अन्या एव। सः सामान्याय भिक्षुकाय अपि शतं रजतनाणकानि ददाति, न तु न्यूनम्। किन्तु एतत्सर्वं गुप्तरूपेण

दानस्य वार्ता अन्येन न ज्ञातव्या इति आशयः आसीत् मम। प्रमादवशात् सः भवन्तम् उक्तवान् एव। कृपया एतत् रहस्यम् अन्यत्र मा प्रकटयतु। अहं प्रचारं कीर्तिं वा सर्वथा न इच्छामि'' इति उक्तवान् लोभी धनिकः।

तदा तत्र आगतः लोभिधनिकस्य सेवकः– ''श्रीमन्! अहं मन्दिरं गत्वा पूजां समाप्य आगमिष्यामि'' इति उक्त्वा ततः निर्गतः स्वस्य गृहं गतवान्। वृद्धभिक्षुकस्य वेषं धृत्वा मन्दया गत्या यजमानस्य समीपम् आगतवान्।

वार्तालापं कुर्वन् उपविष्टः लोभी धनिकः स्वस्य पार्श्वे स्थापितात् स्यूतात् शतरजतनाणकात्मकं लघुग्रन्थिं निष्कास्य तस्मै वृद्धाय भिक्षुकाय दत्तवान्।

वृद्धभिक्षुकस्य निर्गमनस्य अनन्तरं कश्चन संन्यासी आगतवान्। तस्मै अपि शतरजतनाणकात्मकं ग्रन्थिं दत्तवान् लोभी धनिकः।

एवं मध्याह्नाभ्यन्तरे मूक-बधिर-डोम्बादयः दश जनाः आगत्य दानं स्वीकृतवन्तः। एतत्सर्वं दृष्ट्वा दाता धनिकः लोभिनं धनिकम् उक्तवान्– ''भवादृशः दाता मया अन्यत्र कुत्रापि न दृष्टः, न श्रुतश्चापि। एतावता एव भवान् सहस्रं रजतनाणकानि याचकेभ्यः दत्तवान्। सायङ्कालाभ्यन्तरे इतोऽपि द्विगुणितं दद्यात् एव भवान्'' इति।

लोभी धनिकः स्वस्य सेवकस्य उपायं मनसि एव श्लाघमानः– 'अहो कार्यकारिता



एतस्य! अल्पे समये दशविधान् वेषान् धृत्वा आगतवान्' इति चिन्तयन् दातारं धनिकम् उक्तवान्– "दश जनाः आगताः। यथाशक्ति दानं कृतम्। इतोऽपि आगच्छन्तु नाम। मम तु सन्तोषः एव। एतादृशं दानं प्रतिदिनं कुर्वन् एव अस्मि अहम्" इति।

मध्याह्नसमये लोभिधनिकस्य सेवकः वास्तविकेन रूपेण आगत्य– "श्रीमन्! लक्षपुष्पार्चनम्, अभिषेकः इत्यादयः इदमिदानीं समाप्ताः। प्रसादः आनीतः अस्ति मया" इति वदन् अन्तः गतवान्।

किञ्चित्कालानन्तरं लोभी धनिकः अन्तः गत्वा सेवकं पृष्टवान्– "सम्यक् अभिनीतं भवता। मया दत्तं धनं कुत्र?" इति।

"स्वीकरोतु। पञ्चशतं रजतनाणकानि सन्ति अत्र" इति वदन् सः सेवकः धनग्रन्थिं यजमानस्य पुरतः स्थापितवान्।

"पञ्चशतं नाणकानि केवलम्? भवान् तु दशविधैः वेषैः आगतः आसीत्। आहत्य सहस्रं नाणकानि दत्तानि खलु मया?" इति उद्वेगेन उक्तवान् लोभी धनिकः।

"दशवारम् अहं न आगतः। पञ्चवारं केवलम् आगतः। तदा प्राप्तानि पञ्चशतं नाणकानि अत्र सन्ति" इति उक्तवान् सेवकः।

"दशवारं धनं दत्तं खलु मया? भवान् पञ्चवारं केवलम् आगतः चेत् पुनः पञ्चवारं को वा आगतवान् स्यात्?" इति उच्चस्वरेण तर्जनपूर्वकं पृष्टवान् लोभी धनिकः।

"सः मम सेवकः आसीत्" इति वदन् दाता धनिकः तत्र आगतवान्। सः विना शब्दम् आगत्य लोभिधनिक-सेवकयोः सम्भाषणं श्रुतवान् आसीत्।

"मम सेवकः एतावता आगच्छेत्। सोऽपि विश्वासार्हः एव। भवतः पञ्चशतं रजतनाणकानि निश्चयेन प्रत्यागमिष्यन्ति। चिन्तां मा करोतु" इति उक्तवान् दाता धनिकः। रहस्यं प्रकटितम् अभवत् इत्यतः अवमानेन लज्जितः लोभी धनिकः शिरः अवनमय्य स्थितवान्।





# भीरुतानिवारणम्

महाबलिपुरनामके ग्रामे मेघश्यामः नाम कश्चन गोपालकः निवसति स्म। तस्य गृहे महिषीद्वयम् अस्ति। सः क्षीरविक्रयणं कुर्वन् तृप्त्या जीवति स्म। कदाचित् वर्षाकाले चरणार्थं गते तस्य महिष्यौ विषसस्यं खादितवत्यौ मरणं प्राप्तवत्यौ च।

एतेन आघातेन नितरां खिन्नः अभवत् मेघश्यामः। जीवनस्य आधारः एव नष्टः इत्यतः सः यत्र यत्र शक्यते ततः सर्वतः ऋणं स्वीकृतवान्। समये ऋणं प्रत्यर्पयितुं न शक्तवान् सः। ऋणदातारः प्रतिदिनम् आगत्य ऋणप्रत्यर्पणार्थम् आग्रहं कुर्वन्ति स्म।

एकदा रात्रौ पुत्राणां शयनानन्तरं मेघश्यामः पत्नीम् उक्तवान्– "अहम् इदानीं रहस्यरूपेण नगरं गच्छामि। विवाहकाले यत् अङ्गुलीयकं प्राप्तं तत् विक्रीय वाणिज्यस्य आरम्भं करिष्यामि। हस्ते किञ्चित् धनं सङ्गृह्य प्रत्यागमिष्यामि। तावत्पर्यन्तं भवती मङ्गलसूत्रस्थं सुवर्णांशं विक्रीय, अन्येषु गृहेषु पात्र-वस्त्रक्षालनादिकं कुर्वती वा, जीवनं यापयतु" इति।

तदा तस्य पत्नी कनकलता उक्तवती– "एवं मा वदतु भवान्। भवतः अनुपस्थितौ अहं जीवितुं न शक्नोमि। भवता सह अहम् अपि आगमिष्यामि" इति।

"किमर्थम् अधैर्यम् अनुभवति भवती? भवती पुत्राः च मया सहैव यदि नगरम् आगच्छेयुः तर्हि तत्रापि कष्टम् अनुभोक्तव्यं भवेत्। अतः धैर्येण तिष्ठतु तावत्" इति उक्तवान् मेघश्यामः।

"वाणिज्ये लाभः एव भवेत् इत्यत्र कः विश्वासः? अनुभवहीनः भवान् हानिम् अनुभविष्यति चेत् कुटुम्बस्य का गतिः? अपरिचिते स्थले अज्ञाते कार्ये प्रवेशापेक्षया ज्ञाते स्थले साहसप्रवृत्तेः प्रदर्शनम् उचितम्"

इति उक्तवती कनकलता।

तदा मेघश्यामः अनादरेण उक्तवान्– "वाणिज्यविषये अशुभवचनानि वदन्ती मां ग्रामे स्थापयितुं प्रयत्नं करोति भवती। एतादृशं प्ररोचनं किमपि मास्तु। एतादृशम् औषधं भीरुं पाययतु, न तु माम्" इति।

तावता केनचित् क्रियमाणः द्वारताडनशब्दः ताभ्यां श्रुतः। "कः सः?" इति पृच्छन् मेघश्यामः उत्थाय गत्वा द्वारम् उद्घाटितवान्। तस्य पुरतः कश्चन कुब्जः पिशाचः ग्रन्थिरूपेण हस्तौ बद्ध्वा कम्पमानः स्थितः आसीत्। अकस्मात् एतं पिशाचं दृष्ट्वा मेघश्यामः आश्चर्येण स्तब्धः अभवत्।

"भीरुतानिवारणार्थम् औषधं किमपि अस्ति वा? कीदृशम् औषधं तत्?" इति अपृच्छत् सः कुब्जः पिशाचः।

भीतः मेघश्यामः अग्रे किमपि व्यवहर्तुं न शक्तवान्। तदा कनकलता धैर्येण पृष्टवती– "एतत् ज्ञातुं भवान् अस्मिन् मध्यरात्रे अत्र आगतवान् वा?" इति।

तदा कुब्जः पिशाचः नमस्कारपूर्वकम् अवदत्– "अम्ब! तत् भीरुतानिवारकम् औषधं मह्यं ददातु कृपया। तेन भवती पुण्यपात्रं भवेत्। मां सर्वे भीरुं धैर्यहीनं च वदन्ति। श्मशाने सञ्चारार्थम् अपि मम भीतिः। इदम्प्रथमतया ग्रामं प्रविशन् अस्मि। इतरे पिशाचाः तु श्मशाने स्वेच्छया सञ्चरन्तः ग्रामं प्रविश्य कोलाहलम् उत्पादयन्ति। अहं दीपस्य दर्शनात् एव भीतिं



प्राप्नोमि। अतः एतस्याः भीरुतायाः चिकित्सां काञ्चित् करोतु कृपया" इति।

'पिशाचः सर्वथा भीरुः' इति सुस्पष्टं ज्ञातवती कनकलता। अतः सा किञ्चित् तिन्त्रिणीं, लवणं मरीचिकां च मिश्रीकृत्य हिङ्गुपात्रे स्थापयित्त्वा आनीय पिशाचाय दत्त्वा– "एतदेव भीरुतानिवारकम् औषधम्" इति अवदत्।

पिशाचः तत्क्षणे एव तत् औषधं सेवितवान्। अनन्तरम् आकाशे हस्तं प्रसार्य एकं ग्रन्थिम् सङ्गृह्य– "स्वीकरोतु चिकित्सायाः शुल्कम्" इति धनग्रन्थिम् अयच्छत्, ततः निर्गतवान् च।

धनग्रन्थेः उन्नयनात् एव कनकलतया ज्ञातं यत् अन्तः भूरि धनम् अस्ति इति। अतः सा गच्छन्तं पिशाचम् उक्तवती– "क्षणं तिष्ठतु पिशाच! एतत् औषधं दिनत्रयं यावत् स्वीकरणीयम्। अतः श्वः अपि आगच्छतु। औषदं दास्यामि" इति।

"एतेन मम भीरुता अवश्यं निर्गमिष्यति खलु?" इति अपृच्छत् पिशाचः।

तदा कनकलता, भीरुतायाः किं फलम् इति, धैर्यम् अस्ति चेत् किं किं साधयितुं शक्यते इति च सोदाहरणं विस्तरेण उपदिष्टवती। रुचिः यथा वर्धेत तथा बहूनां वीराणां कथाः श्रावितवती।

उषःकालपर्यन्तं तस्याः कथाकथनं प्रवृत्तम्। उषःकाले सः पिशाचः मार्जाररूपं धृत्वा ततः निर्गत्य श्मशानं प्रति अधावत्।

पिशाचस्य निर्गमनानन्तरं तौ दम्पती





धनस्यूतम् उद्घाटितवन्तौ। स्यूतस्य अन्तः बहूनि सुवर्णनाणकानि आसन्। परमसन्तुष्टौ तौ धनं पेटिकायां स्थापितवन्तौ।

अनन्तरदिने रात्रै अपि पिशाचः आगत्य कनकलताम् अवदत्– "भीरुतानिवारकम् औषधं ददातु" इति।

तद्दिने पिशाचस्य कुब्जत्वं किञ्चिदिव अपगतम् इव दृश्यते स्म। कनकलता पूर्वम् एव सज्जीकृतम् औषधं किमपि दत्तवती। तद्दिने अपि वीराणां कथां श्रावयित्वा पिशाचे उत्साहं पूरितवती।

अद्यापि पिशाचः आकाशे हस्तं प्रसार्य धनग्रन्थिं स्वीकृत्य कनकलतायै अयच्छत्। अनन्तरं उलूकस्य रूपेण निर्गत्य श्मशानम् अगच्छत् च। तौ दम्पती अद्यापि प्राप्तं धनं पेटिकायां स्थापितवन्तौ।

मेघश्यामः पत्नीम् उक्तवान्– "श्वः अपि सुवर्णनाणकग्रन्थिः यदि लभ्येत तर्हि वयम् ऋणमुक्ताः स्याम। अनन्तरं वाणिज्यम् अपि आरब्धुं शक्येत" इति।

अनन्तरदिने अपि पिशाचः आगतः एव। तस्य आगमने महोत्साहः स्फुटतया दृश्यते स्म। कनकलतया दत्तम् औषधं पीतं तेन। अद्य तस्य कुब्जता पूर्णतः अपगता आसीत्।

"पश्यतु पिशाचमित्र! भवतः कुब्जतायाः कारणं भीरुता एव आसीत्। मम औषधस्य कारणतः कुब्जता अपगता" इति उक्तवती कनकलता। तया कथाकथनार्थं यदा उद्युक्तं तदा पिशाचः अवदत्– "एताः कथाः श्रोतुं मम समयः नास्ति। इतरैः पिशाचैः इव मयापि बहु करणीयम् अस्ति" इति।

"औषधस्य प्रतिफलरूपेण धनग्रन्थिं दातुं विस्मृतवान् वा?" इति पृष्टवती कनकलता।

तदा पिशाचः क्रोधेन तां पश्यन्– "मां धनं पृच्छन्त्याः भवत्याः कियत् धाष्ट्यर्म्?" इति वदन् जिह्वां दीर्घं प्रसार्य, ताभ्यां दम्पतीभ्यां पेटिकायां स्थापितं धनं स्वीकृत्य गृध्ररूपं धृत्वा श्मशानम् उद्दिश्य अगच्छत्।

एतेन मेघश्यामः अशनिपातकारणतः इव भूमौ पतितः, मूर्च्छां गतः च। कनकलता शीतजलसेचनेन तं सचेतनं कर्तुं प्रयत्नं कृतवती। तया ज्ञातं यत् मया पिशाचाय यत् औषधं दत्तं तेन विशेषपरिणामः न लक्षितः

चेदपि याः कथाः उक्ताः तासां कारणतः तस्य भीरुता अपगता, तेन धैर्यं प्राप्तम् इति।

मूर्च्छां गच्छता मेघश्यामेन यत् आक्रोशनं कृतं तत् श्रुत्वा बहवः तत्र आगताः। कनकलतायाः उपचारेण सचेतनः मेघश्यामः पत्नीम् उक्तवान्– "भवत्याः औषधस्य कारणतः पिशाचस्य एतावत् धैर्यम् आगतं यत् सः पूर्वं दत्तं समग्रं धनं बलात् स्वीकृत्य गतवान्" इति।

तत्र सम्मिलिताः सर्वे मेघश्यामस्य वचनस्य आशयं न ज्ञातवन्तः एव। तदा कनकलता प्रवृत्तं समग्रं निवेदितवती। सर्वे आश्चर्यं प्रकटयन्तः ततः स्वगृहं गतवन्तः।

एतया घटनया ग्रामे सर्वत्र वार्ता प्रसृता यत् कनकलता भीरुतानिवारणार्थम् उपायम् औषधं च जानाति इति।

अनन्तरदिने प्रातःकाले कनकलता अङ्गणे रङ्गवल्लीं लिखन्ती आसीत्। तदा कश्चन वृद्धः स्वपौत्रेण सह आगत्य– "कनकलताम्ब! भवती भीरुतानिवारणार्थम् उपायं जानाति इति मया श्रुतम्। एषः मम पौत्रः। महती भीरुता एतस्य। एतस्मै औषधं ददातु कृपया" इति वदन् कनकलतायै दश रूप्यकाणि दत्तवान्।

एतावता कनकलता ज्ञातवती आसीत् यत् मानवेषु स्थितः भीरुतापिशाचः केन उपायेन निवारयितुं शक्यः इति। भीरुषु धैर्यम्, उत्साहम्, आत्मविश्वासं च अहं पूरयितुं शक्नोमि इति तस्याः विश्वासः अपि आसीत्। सा तं बालं कथाः उक्त्वा प्रेषितवती, अनन्तरदिने पुनः आगन्तुं सूचितवती च।

पत्न्याः सामर्थ्यं दृष्ट्वा मेघश्यामः उक्तवान्– "भवत्याः कार्यम् उत्तमम् अस्ति। भीरुतानिवारणकार्ये अहं भवत्याः साहाय्यं करिष्यामि। ग्रामे स्थित्वा एव एतत् कर्तुं शक्यते। नगरं प्रति गमनस्य आवश्यकता नास्ति एव" इति।

पत्युः अभिप्राये जातं परिवर्तनं दृष्टवत्याः कनकलतायाः महान् सन्तोषः जातः।





# अकस्मात् प्राप्तम्

गणपपुरे माधवः नाम कश्चित् निवसति। तस्य प्रतिवेशी नारायणः। ताभ्यां सामान्यः विद्याभ्यासः कृतः आसीत्। किन्तु तौ स्वयोग्यतानुगुणम् उद्योगं प्राप्तुं न शक्तवन्तौ। ग्रामे तात्कालिकानि कार्याणि कुर्वन्तौ जीवननिर्वहणं कुरुतः तौ।

नारायणः आत्मनः दारिद्र्यविषये अहोरात्रं चिन्तयन् सदा खेदम् अनुभवति। माधवः तु आत्मनः दारिद्र्यविषये न तथा खिन्नः। यावत् अस्ति तावता एव तृप्त्या जीवति स्म।

कदाचित् तौ मार्गे मिलितवन्तौ। तदा नारायणः खेदेन माधवम् उक्तवान्– "भोः मित्र! आवयोः दारिद्र्यं दृष्ट्वा अनुतापेन काचित् देवता ऐश्वर्येण अनुग्रहीष्यति चेत् वरम् अभविष्यत्। किन्तु आवां तु सर्वथा भाग्यहीनौ" इति।

एतत् श्रुत्वा माधवः हसन् उक्तवान्– "यः मानवः स्वसामर्थ्ये न विश्वसिति सः निध्यादीनां प्राप्तिम् इच्छति। विना श्रमं प्राप्तम् अकस्मात् निर्गन्तुम् अपि अर्हति खलु? अतः परिश्रमे विश्वासः करणीयः। निध्यादिषु आशा न प्रदर्शनीया" इति।

एतदनन्तरं तौ कदाचित् नगरं गच्छन्तौ आस्ताम्। तदा मार्गे नारायणेन कश्चन धनस्यूतः प्राप्तः। सः झटिति तम् उन्नीय स्वीकृत्य माधवाय प्रदर्शितवान्। तत्र शतं रजतनाणकानि आसन्।

तावतां नाणकानाम् अकस्मात् प्राप्त्या सन्तुष्टः नारायणः– "पश्यतु माधव! आवयोः भाग्यं फलितम्। अदृष्टदेवता आवाम् एतेन धनेन अनुगृहीतवती" इति उक्तवान्।

"कस्यचित् अन्यम्य धनम् एतत्। अजागरूकतावशात् पतितं स्यात्। किं, काचित् देवता आकाशात् पातितवती इति

"भामहः"

भावयति भवान्?" इति उक्तवान् माधवः।

"धनम् आकाशात् पतितं स्यात्, अन्यस्य हस्तात् च्युतं वा स्यात्। किं तेन? आवयोः दृष्ट्या उभयम् अपि समानम्। अर्धार्धं प्राप्नुवः आवाम्" इति उक्तवान् नारायणः।

किन्तु माधवः तत् निराकुर्वन् उक्तवान्– "तथा मास्तु। एतं धनस्यूतं ग्रामाधिकारिणः वशे अर्पयाव। यस्य धनं नष्टं सः आगत्य तं पृच्छेत् एव" इति।

तदा नारायणः असमाधानेन उक्तवान्– "माधव! भवान् मां कुमार्गगामिनं भावयति चेदपि चिन्ता नास्ति। अदृष्टवशात् प्राप्तम् एतत् धनं मत्तः मा निवारयतु भवान्। अर्धं भागं कृपया स्वीकरोतु" इति।

माधवः प्रतिवचनं किमपि अयच्छन् नारायणेन दत्तानि पञ्चाशत् रजतनाणकानि स्वीकृतवान्। अनन्तरं तौ नगरं प्राप्तवन्तौ। नारायणः अकस्मात् प्राप्तेन तेन धनेन स्वनिमित्तं पत्नीपुत्रादीनां निमित्तं च वस्त्राणि क्रीतवान्। माधवः तु ततः किञ्चित् अपि व्ययम् अकृत्वा गृहं प्रति तत् नीतवान्।

एकस्य मासस्य अनन्तरं नारायणः माधवः च मिलितवन्तौ। तदा माधवः उक्तवान्– "मया नगरे धनागारे लिपिकारकार्यं प्राप्तम् अस्ति" इति।

"नगरे धनागारे लिपिकारोद्योगः? कथं प्राप्तं एतत्? कः उपायः एतदर्थं कृतः?" इति आश्चर्येण पृष्टवान् नारायणः।



"कथं प्राप्तम् इति विस्तरेण वदामि, शृणोतु। तद्दिने मार्गे प्राप्ते धने अर्धं भागं मह्यं दत्तवान् खलु भवान्? तत् स्वीकृत्य गृहं गतः अहं मम पत्न्याः समीपे विद्यमानानि पञ्चविंशतिं रजतनाणकानि अपि योजयित्वा ग्रामाधिकारिणः रामनाथस्य समीपं गतवान्। पञ्चसप्ततिं रजतनाणकानि तस्य पुरतः संस्थाप्य प्रवृत्तं समग्रं निवेदितवान् ...." इति उक्तवान् माधवः।

"तन्नाम मया पञ्चाशत् रजतनाणकानि यत् स्वीकृतानि तत् तेन ज्ञातं खलु?" इति आतङ्कयुक्तेन स्वरेण पृष्टवान् नारायणः।

"भवतः रक्षणार्थम् अहं प्रवृत्तायां घटनायां कल्पनांशम् अपि योजितवान्। धनस्यूतः प्रथमं भवता दृष्टः इति, तं स्यूतं भवान् मम

हस्ते स्थापितवान् इति, अहं सन्तोषेण भवते पञ्चविंशतिं रजतनाणकानि दत्तवान् इति च तम् उक्तवान्। सः स्यूतः अस्मद्ग्रामीणस्य मल्लेशस्य इति श्रुतम्। मल्लेशः तु नगरे महता प्रमाणेन शाकवाणिज्यं कुर्वन् अस्ति खलु? यावत् न्यूनम् अस्ति तावत् द्वित्रेषु मासेषु अहं दास्यामि इति उक्तवान् अस्मि'' इति उक्तवान् माधवः।

''तदस्तु। उद्योगप्राप्तेः, एतस्याः घटनायाः च कः सम्बन्धः?'' इति आश्चर्येण पृष्टवान् नारायणः।

''सम्बन्धः अस्ति इत्यतः एव खलु वक्तुम् आरब्धवान्? ह्यः ग्रामाधिकारी माम् आहूय मम प्रामाणिकतायाः प्रशंसां कुर्वन् उक्तवान्– 'गतदिने अहं धनस्थापनार्थं कोषागारं गतवान् आसम्। तत्रत्यः अधिकारी सुपरिचितः। प्रामाणिकः कश्चन साहाय्यकः अपेक्षितः इति उक्तवान् सः। अहं भवतः विषयम् उक्तवान्। सः भवन्तम् उद्योगे नियोक्तुम् इच्छति' इति। श्वः एव मया उद्योगार्थं गन्तव्यम् अस्ति'' इति उक्तवान् माधवः।

''भवता उद्योगः प्राप्तः इति तु सन्तोषाय एव। किन्तु इतः परं ग्रामे अहम् एकाकी भविष्यामि। दुराशायाः योग्यं फलं प्राप्तं मया'' इति खेदेन उक्तवान् नारायणः।

नारायणस्य स्कन्धे हस्तं स्थापयित्वा उक्तवान् माधवः– ''भोः, चिन्तां मा करोतु। 'भवान् स्वभावतः सज्जनः, दारिद्र्यकारणतः तथा व्यवहृतवान्' इति अहं जानामि। अतः भवतः दारिद्र्यविषयं, सज्जनत्वविषयं च रामनाथं मल्लेशं च उक्तवान् अस्मि। मल्लेशः स्वस्य आपणे भवते उद्योगं दातुम् अङ्गीकृतवान्। श्वः परश्वः वा उद्योगार्थम् आह्वानम् आगच्छेत्। भवान् अपि मया सहैव नगरे स्थास्यति'' इति।

एतदनन्तरं द्वित्रेषु एव दिनेषु मल्लेशः नारायणम् उद्योगार्थम् आहूतवान्। ततः सप्ताहाभ्यन्तरे एव नारायणः माधवः च सकुटुम्बं नगरं गतवन्तौ।





## बिण्टु राङ्ग्

पुरातनकशेरुकप्राणिषु अन्यतमस्य, भल्लूकमार्जारः इति ख्यातस्य बिण्टुराङ्ग् प्राणिनः केवलं, शाखानां दृढग्रहणे उपकारकं पुच्छं भवति।

## मार्जारश्मश्रूणि

माजरिण यत् स्थलं प्रवेष्टव्यम् अस्ति तस्य वैशाल्यं ज्ञातुं तदीयानि श्मश्रूणि उपकुर्वन्ति। मार्जारस्य शरीरस्य स्थौल्यं यावत् भवति तावदेव दैर्घ्यं भवति तदीयश्मश्रूणाम् अपि।



पार्श्वद्वये श्मश्रुस्पर्शः भवति चेत् अग्रे गमनम् अशक्यम् इति भावयति मार्जारः।

## अतिभयङ्करः वन्यमृगः



वन्यमृगेषु केफ्कुलोत्पन्नः आफ्रिकादेशीयः महिषः एव अतिभयङ्करः इति भाव्यते। एषः किञ्चिदवनतेन स्वशिरसा ६० कि.मी. वेगेन आघातं करोति। १.५ मीटर् उन्नतस्य एतस्य प्राणिनः भारः प्रायः एकं टन् भवेत्। एतस्य शृङ्गे १.४ मीटर् यावत् विस्तृते भवतः। सिंहाः अपि एतस्मात् महिषात् भीताः भवन्ति इति श्रूयते।

# दूरदर्शने संस्कृतकार्यक्रमः

| | |
|---|---|
| अमरः - विजय! अद्य दूरदर्शने संस्कृतकार्यक्रमं दृष्टवान् वा? | Vijay! You saw today's T.V. programme in Sanskrit? |
| विजयः - न भोः। | No. |
| अ - अवश्यं द्रष्टव्यः आसीत् अद्यतनः कार्यक्रमः। | You should have seen it! |
| वि - गतमासे प्रतिसप्ताहम् अपि दृष्टवान्। सर्वे कार्यक्रमाः नीरसाः एव आसन्। अतः अस्मिन् सप्ताहे द्रष्टुम् उत्साहः न जातः। | I saw them every week last month. All of them were dull; so I had no interest to watch them this week. |
| अ - अतीव समीचीनः आसीत् अद्यतनः कार्यक्रमः। | Today's programme was really good! |
| वि - किम् अधिकृत्य आसीत्? | What was it about? |
| अ - सामाजिकं वस्तु। बालाः सम्यक् अभिनीतवन्तः। लीलया संस्कृतेन वदन्ति स्म ते। | It had a modern theme. Children acted well and spoke Sanskrit with ease. |
| वि - भवतः गृहे ध्वनिमुद्रणव्यवस्था नास्ति खलु? | You have a video recorder at home, do you? |
| अ - भवान् तं कार्यक्रमं द्रष्टुम् इच्छति वा? तर्हि कदाचित् मम गृहम् आगच्छतु। मम प्रतिवेशिगृहे सा व्यवस्था अस्ति। तत्र प्रदर्शयिष्यामि। | Why, you want to see that programme? Come home sometime. There is one at our neighbour's. I'll show it you there |
| वि - किन्तु .....। | But.... |
| अ - गमने सङ्कोचः इति वा? तद्गृहं मम गृहम् इव। ते सन्तोषेण प्रदर्शयिष्यन्ति। यदा समयः तदा आगच्छतु भवान्। अहं नेष्यामि भवन्तम्। | You feel shy to go there? Their house is as good as my own. They will be happy to show it to you. Come when you have time. I will take you there. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां नवम्बर्-८९ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टेम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'जुलै'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **सिध्यति मम जीवनं परिश्रमेण एव।**

द्वितीयचित्रम् - **मम तु न केवलं परिश्रमेण, अपि तु कौशलेन।**

प्रेषकः - श्री ए. वेङ्कटरमणभट्टः, कार्मेल् प्रौढशाला, मण्ड्य-५७१४०१, कर्णाटकम्।

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अस्पृश्यता - | Untouchability |
| इक्षुदण्डः - | Sugar-cane |
| उपनेत्रम् - | Spectacles |
| उलूकः - | Owl |
| काहलः - | Trumpet |
| क्षान्तवान् - | Pardoned |
| क्षाम्यामि - | Will pardon |
| खञ्जता - | Limping |
| गृध्रः - | Vulture |
| चर्मव्याधिः - | Skin-disease |
| ज्या - | Bow-string |
| तरक्षुः - | Leopard |
| दीपशिखा - | Torch |
| परस्परावगतिः - | Mutual understanding |
| परिवृत्तः - | Changed |
| पलितम् - | Grey |
| प्रभूतम् - | Enough |
| प्ररोचनम् - | Instigation |
| भीरुता - | Cowardliness |
| भूरि - | Plenty |
| मरीचिका - | Chilli |
| महार्घः - | Costly |
| मार्जारः - | Cat |
| लवणम् - | Salt |
| वृतिः - | Hedge |
| व्यापृतः - | Commenced |
| शस्त्रचिकित्सा - | Surgery |
| शृङ्गम् - | Horn of an animal |
| श्मश्रु - | Moustache |
| षीष्कारः - | Whistle |
| सघोषविक्रयणम् - | Auction |
| सत्यसन्धः - | Truthful |
| सन्धिः - | Agreement |
| सन्निपातज्वरः - | Typhoid |
| सिकताः - | Sand |
| सुप्तवान् - | Laid down |
| स्फीतम् - | Swollen |
| हिङ्गुः - | Asafoetida |

